नमोऽर्हते

18/4/94

भगवत्श्रीमद्यशोभद्रसूरिविरचितव्याख्यायुतं भवविरहाङ्कभगवत्श्रीहरिभद्रसू०

# श्रीषोडशकप्रकरणम् ॥

( न्यायाचार्यवृत्तिगतटीप्पनयुतं )



प्रकाशिका—जामनगरवास्तव्यश्रेष्ठिचुनीलाल लक्ष्मीचन्द्र धारशीभाइ विहितार्थसहायेन मालवदेशान्तर्गतरत्नपुरीयश्रीऋषभदेवजीकेशरीमलजी जैन श्वेतांबरसंस्था.




वीरसंवत् २४६२ | प्राप्तिस्थानं-जैनानंदपुस्तकालय गोपीपुरा—सुरत. | वि.संवत् १९९२

प्रतयः ५०० | पण्यम् एकोरूप्यकः | रु. १–०–०

जामनगरे 'बालचन्द्र हीरालाल' इत्यनेन स्वकीये 'जैनभास्करोदय प्रेस' मुद्रणालये मुद्रितं ।

श्रीयशोभद्रसूरिसूत्रितवृत्तियुतस्य आचार्यपुरन्दरश्रीहरिभद्रसूरिप्रणीतस्य

## श्रीषोडशकस्य उपक्रमः



ग्रन्थोऽयं जग्रन्थे श्रीभवविरहांकैः श्रीहरिभद्रसूरिभिः प्रकरणरूपः, प्रकरणानि च भगवद्भिरेतैः श्रीपंचाशकाष्टकादीनि परःशतानि सूत्रितानि सूरिभिः, क्रमश्च प्रकरणानां न ज्ञायते, परं प्रकरणमिदं कस्यचित् वैयावृत्त्यकरस्यागमाब्धिमवगाढुमशक्तस्य व्याख्यानार्थमात्मानुस्मरणार्थं च यथार्थमितिवृत्तं साधोरभिलक्ष्य विहितं स्यादित्यनुमीयते, अत एव चात्र धर्मपरीक्षकजीवलक्षणान्यादौ विधाय सिद्धिप्राप्तिं पर्यवसाने वर्णयन्तः पूज्याः परिणामवादं प्रारंभदर्शनीयं प्रान्ते दर्शयाञ्चक्रुः, ग्रन्थे चात्र संवादशैल्यैव पदार्थप्रकरनं प्रादुश्चक्रुः, पूज्यप्रवराश्च पूर्वगतपदार्थसार्थदर्शनदृढदर्शना इति नैतद्ग्रन्थनिर्दिश्यमानानां पदार्थानामैदंयुगीनामागमेष्वदृश्यत्वेऽपि निर्मूलतोत्प्रेक्ष्या, नहि बाह्यलिंगादीनाममारतादिदर्शने सिद्धान्तसंवादनपराणां कदाचिदपि पारमेश्वरे पथि कल्पनाशिल्पिकल्पिततासंभवोऽपि शोभोति। प्रकरणं चेदमार्याषोडशकमानषोडशषोडशकमानमित्यस्य यथार्थमभिधानं षोडशकमिति, सूरिपुरन्दरप्रणीतेष्वनेकेषु आर्याच्छन्दःप्रतिबद्धः संस्कृतेन संस्कृतोऽयंमेव ग्रन्थः। आर्याणां संस्कृतानां प्रयुक्तत्वात् नास्य विवरणमुपयुक्ततममित्यवधार्य न प्रत्नपुरुषैर्व्याख्यायै प्रयतितं, कालहान्या पारम्पर्यशून्यं वाऽवगम्य जनवृन्दमत्र व्याख्यायै यतितं श्रीमद्भिर्यशोभद्रसूरीश्वरैः, परमेषापि दण्डकानुसारिणीति कालहान्या दुर्बोधतामवेत्यास्यायतितं न्यायाचार्यश्रीमद्यशोविजयोपाध्यायैरन्वयानुसा-

रिणीं व्याख्यां विधातुं, एतद्व्याख्याद्वययुतप्रकरणमिदं प्राग् मुद्रितं श्रेष्ठिदेवचन्द्रलालभाइजैनपुस्तकोद्धारसंस्थया, परमद्युत्य तत्प्रतीनां दुर्लभतामवेत्य च श्रीयशोभद्रीयव्याख्याया उपयुक्ततामायासितं तद्वृत्तिसहितस्यास्य पुनर्मुद्रणे, यच्च श्रीमद्भिर्न्यायाचार्यैर्विशेषेण क्वचित्पदार्थपरिस्फोटाय यतितं तदत्र टीपन्यां निवेशितमिति न क्षुण्णमत्र विदुषां, विहितेऽपि यत्ने शोधनादौ क्षुण्णं क्षन्तव्यं क्षमाधनैरिति न प्रार्थ्यते तेषामेतत्स्वभावत्वादेव । आनन्दसागरः । श्री लक्ष्मी जैन आश्रम, जामनगर.



## श्रीषोडशकस्य विषयक्रमः ।


संपूर्णम्



॥ श्रीजिनाय नमः ॥

भवविरहांकश्रीहरिभद्रसूरिवरैर्विहितं श्रीयशोभद्रसूरिकृतटीकायुक्तं

# पोडशकम्



अमृतमिवामृतमनघं जगाद जगते हिताय यो वीरः। तस्मै मोहमहाविषविघातिने स्तान्नमः सततम् ॥ १ ॥

यस्याः संस्मृतिमात्राद् भवन्ति मतयः सुदृष्टपरमार्थाः। वाचश्च बोधविमलाः सा जयतु सरस्वती देवी ॥ २ ॥

इह भवजलधिनिमग्नसत्त्वाभ्युद्दिधीर्षाभ्युद्यतेन स्वहितसंपादननिपुणेन गुरुलाघवचिन्तावता प्रश्नार्थव्याकरणसमर्थेन विदुषा सद्धर्मपरीक्षायां यत्नो विधेयः, सा च परीक्षकमंतरेण न संभवति, तदविनाभावित्वात् परीक्षायाः, सद्धर्मपरीक्षकादिभावप्रतिपादनार्थं चार्यापोडशकाधिकारप्रतिबद्धं प्रकरणमारेभे हरिभद्रसूरिः, तस्य चादावेव प्रयोजनाभिधेयसंबंधप्रतिपादनार्थमिदमार्यासूत्रं जगाद—

**प्रणिपत्य जिनं वीरं सद्धर्मपरीक्षकादिभावानाम् । लिंगादि भेदतः खलु वक्ष्ये किंचित् समासेन ॥ १ ॥**

प्रणिपत्य–नमस्कृत्य जिनं–जितरागद्वेषमोहं सर्व्वज्ञं, वीरं–सदेवमनुष्यासुरलोके 'श्रमणो भगवान्महावीर' इत्यागमप्रसिद्धनामानं, अनेनेष्टदेवतास्तवद्वारेण मंगलमाह, सद्धर्म्मपरीक्षकः–त्रिविधो वक्ष्यमाणस्तदादयो ये भावास्तेषां, किंचित्–इत्यस्य स्वल्पमात्राभिधायित्वाल्लेशं वक्ष्ये लिंगादि भेदतः खल्विति–लिंगवृत्तादिविशेषप्रतिपादनद्वारेण, यद्यप्यपरैरपि पूर्वाचार्यैः सद्धर्म्मपरीक्षादयो भावाः स्फुटमेवाभिहितास्तथाप्यहं समासेनैवाभिधास्यामीति संक्षेपाभिधानं प्रयोजनं, स्वरूपतस्तु शिष्यबुद्धौ सद्धर्म्मपरीक्षकादिभावानामारोपणं, तच्च वचनरूपापन्नं प्रकरणमंतरेण न संभवतीति प्रकरणमुपायः, उपेयं तु तदर्थपरिज्ञानं, उपायोपेयलक्षणश्च संबंधस्तर्कानुसारिणः प्रति, उक्तंच–"शास्त्रं प्रयोजनं चेति, संबंधस्याश्रयावुभौ । तदुक्त्यंतर्गतस्तस्माद्, भिन्नो नोक्तः प्रयोजनात् ॥१॥" समयानुसारिणस्त्वंगीकृत्य गुरुपर्व्वक्रमलक्षणः, अभिधेयं तु सद्धर्म्मपरीक्षकादयो भावाः प्रकरणप्रतिपाद्याः, किमर्थं चेदं प्रयोजनादित्रयं प्रतिपाद्यते ?, शिष्यश्रवणप्रवृत्त्यर्थं, यथोक्तं–"प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटम् । मंगलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥१॥" इति ॥ १ ॥

सद्धर्म्मपरीक्षकस्य त्रिविधस्य व्यापारमुपदर्शयति—

**बालः पश्यति लिंगं मध्यमबुद्धिर्विचारयति वृत्तम् । आगमतत्त्वं तु बुधः परीक्षते सर्वयत्नेन ॥ २ ॥**

बालः–विशिष्टविवेकविकलो लिंगं–वेषमाकारं बाह्यं पश्यति प्राधान्येन, धर्म्मार्थिनोऽपि तस्य तत्रैव भूयसा रुचिप्रवृत्तेः, मध्यमबुद्धिः–मध्यमविवेकसंपन्नो विचारयति–मीमांसते वृत्तं–वक्ष्यमाणस्वरूपं, प्राधान्येन समाश्रयति, तत्रैवाभिलाषात् , आग-

मतत्त्वं तु आगमपरमार्थमैदंपर्यरूपं बुधः-विशिष्टविवेकसंपन्नः परीक्षते—समीचीनमवलोकयति सर्व्वयत्नेन—सर्व्वादरेण, धर्म्माधर्मव्यवस्थाया आगमनिबंधनत्वात्, यत उक्तं-"धर्म्माधर्म्मव्यवस्थायाः, शास्त्रमेव नियामकम् । तदुक्तासेवनाद् धर्मस्त्वधर्म्मस्तद्विपर्ययात् ॥ १ ॥" ॥ २ ॥ इदानीं पूर्व्वोक्तानां बालादीनामेव लक्षणमाह—

**बालो ह्यसदारंभो मध्यमबुद्धिस्तु मध्यमाचारः । ज्ञेय इह तत्त्वमार्गे बुधस्तु मार्गानुसारी यः ॥ ३ ॥**

बालो हि पूर्वोक्तः असन्-असुंदरः आरंभोऽस्येत्यसदारंभः, अविद्यमानं वा यदागमे व्यवच्छिन्नं तदारभत इत्यसदारंभः, न सदा-न सर्वदा स्वशक्तिकालाद्यपेक्ष आरंभोऽस्येति वा, मध्यमबुद्धिस्तु पूर्वोक्तो मध्यमाचारः, आगमैदंपर्यविकलत्वात् प्रावचनिककार्याप्रवृत्तेः, ज्ञेय इह प्रक्रमे तत्त्वमार्गे परमार्थमार्गे प्रवचनोन्नतिनिमित्ते बुधस्तूक्तलक्षण एव मार्गानुसारी ज्ञानादित्रयानुसारी, स्वपरयोस्तद्वृद्धिहेतुत्वेन, यः स विज्ञेय इति ॥ ३ ॥ कथं पुनर्बाह्यलिंगप्राधान्यदर्शिनो बालत्वमित्याह—

**बाह्यं लिंगमसारं तत्प्रतिबद्धा न धर्मनिष्पत्तिः । धारयति कार्यवशतो यस्माच्च विडंबकोऽप्येतत् ॥ ४ ॥**

बाह्यं-बहिर्वर्त्ति दृश्यं लिंगमाकारो वेषस्तदसारं, यतः तत्प्रतिबद्धा-तदविनाभाविनी न धर्म्मनिष्पत्तिः-न धर्म्मसंसिद्धिर्विदुषां मता, धारयति कार्यवशतः-कार्यांगीकरणेन स्वाभिप्रेतफलसिद्धये यस्माच्च विडम्बकोऽप्येतद्, धर्म्मनिष्पत्त्यभावविवक्षया यस्माच्चेति हेत्वंतरसूचनं, एको हेतुर्बाह्यलिंगाद्धर्म्मनिष्पत्तेरभावो, द्वितीयस्तु कुतश्चिन्निमित्ताद्विडंबकस्यापि तद्धारणं, आभ्यां बाह्यलिंगमसारं, स तु बालस्तदेव प्राधान्येन मन्यत इति ॥४॥ ननु च बाह्यलिंगस्य कथमप्राधान्यं भवद्भिरुच्यते? यतस्तत् परिग्रहत्यागरूपमित्याशंक्याह—

**बाह्यग्रंथत्यागान्न चारु नन्वत्र तदितरस्यापि । कंचुकमात्रत्यागान्न हि भुजगो निर्विषो भवति ॥ ५ ॥**

बाह्यग्रंथत्यागाद्–धनधान्यस्वजनवस्त्रादित्यागाद् न चारु–न शोभनं बाह्यलिंगं, ननु निश्चितमेतद् अत्र लोके तद् बाह्यलिंगमितरस्यापि–मनुष्यतिर्यक्प्रभृतेः संभवति, एनमेवार्थं प्रतिवस्तूपमया दर्शयति–कंचुकमात्रत्यागाद्–उपरिवर्तित्वङ्मात्रपरित्यागात् नहि–न च भुजगः–सरीसृपः कथंचित् निर्विषो भवति ॥ ५ ॥ प्रस्तुतमेवार्थं तंत्रांतरसंवादेनाह—

**मिथ्याचारफलमिदं ह्यपरैरपि गीतमशुभभावस्य । सूत्रेऽप्यविकलमेतत्प्रोक्तममेध्योत्करस्यापि ॥ ६ ॥**

मिथ्या–अलीको विशिष्टभावशून्यः आचारो मिथ्याचारस्तस्य फलं–कार्यं इदं–बाह्यलिंगं केवलमेव, हिः यस्माद्, अपरैरपि तंत्रांतरीयैः गीतं–कथितमशुभभावस्य आन्तरशुभभावरहितस्य पुंसो, मिथ्याचारस्वरूपं चेदं–"बाह्येंद्रियाणि संयम्य, य आस्ते मनसा स्मरन् । इंद्रियार्थं विमूढात्मा, मिथ्याचारः स उच्यते ॥ १ ॥" जन्मांतरोपार्जिताकुशलकर्मविपाक एवैष यद्भोगोपभोगादिरहितेन प्रेक्षावत्पुरुषपरिनिंदनीयं क्लिष्टं जीविकाप्रायं तथाविधबाह्यलिंगधारणमिति, तंत्रांतरप्रसिद्धमिममर्थमंगीकृत्यापरैरपीत्युक्तं, न केवलं तंत्रांतरेषु, सूत्रेऽपि आगमेऽपि स्वकीयेऽविकलं–परिपूर्णमेतद्–बाह्यलिंगं स्वकीयमेव प्रोक्तं प्रतिपादितं ऐहभविकपारभविकलिंगान्याश्रित्य अमेध्योत्करस्यापि–उच्चारनिकरकल्पस्यापि प्रवचनोदिताशेषगुणशून्यस्येतियावत्, यत उक्तम्–"अणंतसो दव्वलिंगाइं" 'मध्यमबुद्धिर्विचारयति वृत्त'मित्युक्तं, तत्र किं तदित्याह—

**वृत्तं चारित्रं खल्वसदारंभविनिवृत्तिमत् तच्च । सदनुष्ठानं प्रोक्तं कार्ये हेतूपचारेण ॥ ७ ॥**

वृत्तं-वर्त्तनं विधिप्रतिषेधरूपं, तच्च चारित्रमेव, खलुशब्दस्यावधारणार्थत्वात्, तच्चेह सदनुष्ठानं प्रोक्तं, तत्कीदृशम्?-'असदारंभविनिवृत्तिमत्' असदारंभः-अशोभनारंभः प्राणातिपाताद्याश्रवपंचकरूपस्ततो (वि) निवृत्तिमद्-हिंसादिनिवृत्तिरूपमहिंसाद्यात्मकं, ननु कथं सदनुष्ठानं चारित्रमभिधीयते?, यतश्चारित्रमांतरपरिणामरूपं, सदनुष्ठानं तु बाह्यसत्क्रियारूपं, तदनयोः स्वरूपभेदः परिस्फुट एवास्तीत्याशंक्याह-'कार्ये हेतूपचारेण' कार्ये सदनुष्ठानरूपे हेतूपचारेण-भावोपचरणात्, तत्पूर्वकत्वात्सत्क्रियायाः, यच्चांतरपरिणामविकलं तत् सदनुष्ठानमेव न भवतीति भावः ॥ ७ ॥ एतच्च सदनुष्ठानं शुद्धाशुद्धभेदं, तद्द्वयमप्याह—

परिशुद्धमिदं नियमादांतरपरिणामतः सुपरिशुद्धात्। अन्यदतोऽन्यस्मादपि बुधविज्ञेयं त्वचारुतया ॥८॥

परिशुद्धं-सर्वप्रकारशुद्धं इदं-सदनुष्ठानं नियमात्-नियमेन आन्तरपरिणामतः-तथाविधचारित्रमोहनीयकर्म्मक्षयोपशमादिजन्यात् सुपरिशुद्धात्, शास्त्रानुसारेण सम्यक्त्वज्ञानमूलादिति भावः, अन्यदिति-अपरिशुद्धम् अतोऽन्यस्माद्-आंतरपरिणामाद्योऽन्यः कश्चिद्धेतुर्लाभपूजाख्यात्यादिस्ततोऽन्यस्मादपि प्रवर्त्तते, ननु परिशुद्धापरिशुद्धयोः सदनुष्ठानयोः स्वरूपं तुल्यमेवोपलभामहे, तत्कथं प्रतिनियतस्वरूपतया ज्ञायत इत्याह-'बुधविज्ञेयं त्वचारुतया' बुधैः-तत्त्वविद्भिरेव अचारुतया-असुंदरत्वेनेतररूपविविक्तं तद्विज्ञायते यथा अचार्विति, न पुनरितरैः, तेषां तद्गतविशेषानुपलंभादिति ॥ ८ ॥ कः पुनर्विशेषो यदुपलंभात् सदनुष्ठानासदनुष्ठानयोरिदमवधार्यते-परिशुद्धमेतदिति?, तदुपदर्शनार्थमाह—

---

टीप्पन सर्वं न्यायाचार्यवृत्तिगत १ तच्चेहासदारंभाश्रवरूपाद्विनिवृत्तिमदहिंसाद्यात्मक सदनुष्ठान प्रोक्त कार्ये-सदनुष्ठानरूपे हेतो -आंतरचारित्रपरिणामरूपस्योपचारेण-अध्यारोपेण ॥ ७ ॥

गुरुदोपारंभितया लघ्वकरणयत्नतो निपुणधीभिः । सन्निंदादेश्च तथा ज्ञायत एतन्नियोगेन ॥ ९ ॥

गुरून् दोपान्–प्रवचनोपघातकारिणः आरब्धुं शीलमस्येति गुरुदोपारंभी तद्भावस्तत्ता तया, लघुपु–सूक्ष्मेपु दोपेष्वकरणयत्नः–परिहारादरस्तस्माच्च निपुणधीभिः–कुशलबुद्धिभिः तथा सतां–सत्पुरुषाणां साधुश्रावकप्रभृतीनां निंदादि–निंदागर्हाप्रद्वेपादिः तस्माच्च ज्ञायत एतदपरिशुद्धानुष्ठानं नियोगेन–अवश्यंतया, यो हि गुरुदोपादिपु प्रवर्त्तते तस्यांतःकरणशुद्धेरभावादसदनुष्ठानमेतदिति निश्चीयते ॥ ९ ॥ 'आगमतत्त्वं तु बुधः परीक्षत' इत्युक्तं, किं पुनस्तदित्याह—

आगमतत्त्वं ज्ञेयं तद् दृष्टेष्टाविरुद्धवाक्यतया । उत्सर्गादिसमन्वितमलमैदंपर्यशुद्धं च ॥ १० ॥

आगमतत्त्वं ज्ञेयं भवति तत्, कथं ज्ञेयं?–दृष्टं–प्रत्याक्षानुमानप्रमाणोपलब्धं इष्टं–आगमेन स्ववचनैरेवाभ्युपगतं ताभ्यामविरुद्धानि वाक्यानि यस्मिन्नागमतत्त्वे तत् दृष्टेष्टाविरुद्धवाक्यं तद्भावस्तत्ता तया, योऽर्थः प्रत्यक्षानुमानाभ्यां परिच्छिद्यते तस्मिन् यद् आगमतत्त्वमप्यविरोधि भवति, तद्विरुद्धस्य ताभ्यामेव निराकरणात्, प्रत्यक्षानुमानविरुद्धस्याप्रमाणत्वात्, स्ववचनैरेवागमेनाभ्युपगतेऽर्थे प्रदेशांतरवर्त्तिनाऽस्यैवागमस्य वचनं यदि विरोधि न भवेदित्यर्थः, तत् आगमतत्त्वमिष्टाविरोधिवाक्यं भवति, परस्पराविरोधिवचनमित्यर्थः, तदेव विशिनष्टि–'उत्सर्गादिसमन्वितं' उत्सर्गः–सामान्यं, 'यथा न हिंस्याद्भूतानि,' आदिशब्दाद् अपवादः–विशेषो ग्लानादिप्रयोजनगतस्ताभ्यां युक्तं अलं–अत्यर्थं ऐदंपर्यशुद्धं च–इदं परं–प्रधानमस्मिन् वाक्य इतीदंपरं तद्भाव ऐदंपर्यं—वाक्यस्य तात्पर्यं शक्तिरित्यर्थस्तेन शुद्धं यदागमतत्त्वं तदिह ज्ञेयमिति ॥ १० ॥ तदेवागमतत्त्वमुपन्यस्यति ग्रंथकारः—

**आत्माऽस्ति स परिणामी बद्धः सत्कर्मणा विचित्रेण । मुक्तश्च तद्वियोगाद्धिंसाहिंसादि तद्धेतुः ॥ ११ ॥**

आत्मा–जीवः सोऽस्ति, लोकायतमतनिरासेनैवं यत्र प्रतिपाद्यते तदागमतत्त्वमिति, एवं पदांतरेष्वपि संबंधनीयं, स परिणामी सः–पूर्वप्रस्तुत आत्मा परिणामी–परिणामसहितः, पंचस्वपि गतिष्वन्वयी चैतन्यस्वरूपः पुरुषः, परिणामलक्षणं चेदं–"परिणामो ह्यर्थांतरगमनं नच सर्वथा व्यवस्थानम् । नच सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥ १ ॥" स च परिणामी जीवो बद्धः सत्कर्मणा विचित्रेण–वस्तुसत्कर्म्म, न काल्पनिकं वासनादिस्वभावं, तेन बद्धो जीवप्रदेशकर्म्मपुद्गलान्योऽन्यानुगतिपरिणामेन, यथोक्तं बंधाधिकारे–"तत् पौद्गलमात्मस्थमचेतनमतींद्रियम् । बंधं प्रत्यादिमत् कर्म्म, संतातिं प्रत्यनादिकम् ॥१॥" मुक्तश्च तद्वियोगात्–कर्म्मवियोगात्–आत्यंतिककर्म्मपरिक्षयात्, 'हिंसाहिंसादि तद्धेतु'रिति हिंसा आदिर्यस्य तद्धिंसादि–प्राणातिपातादिपंचकम् अहिंसा आदिर्यस्य तदहिंसादि–महाव्रतपंचकं तयोर्बद्धमुक्तयोः, अर्थतो बंधमोक्षयोर्वा हेतुर्वर्त्तते हिंसादि अहिंसादि चेति ॥ ११ ॥

'ऐदंपर्यशुद्धं चे'त्युक्तं, का पुनः सा शुद्धिरैदंपर्यस्येत्याह—

**परलोकविधौ मानं वचनं तदतींद्रियार्थदृग्व्यक्तम् । सर्वमिदमनादि स्यादैदंपर्यस्य शुद्धिरिति ॥ १२ ॥**

परलोकविषयो विधिः–कर्त्तव्योपदेशस्तस्मिन् मानं–प्रमाणं वचनं–आगमः, कीदृशमित्याह–तद्–वचनं अतींद्रियानर्थान् पश्य-

---

१ न तु कूटस्थनित्य, एतेन सांख्यादिमतनिरास, तथा बद्धः सता–वस्तुसता, नतु कल्पितविद्यादिस्वभावेन, कर्मणा चित्रेण नानारूपेण, एतेन वेदांतादिमतनिरास. २ आगमः परिणामित्वादिक दृष्टेष्टाबाधितमित्यागमतत्त्वस्य दृष्टेष्टाविरुद्धवाक्यत्वमुपदर्शितम्, उत्सर्गापवादयुक्तत्वं च स्फुटमेव, तत्सूत्राणां बहूनामुपलभाद्, अथैदंपर्यशुद्धिमुपदर्शयति ॥

तीत्यतींद्रियार्थदृक्-सर्वज्ञः सर्वदर्शी तेन व्यक्तं-अभिव्यक्तार्थं प्रतिपादितार्थमितियावत्, सर्वमिदं-वचनमनादि स्यात् प्रवाहतः सर्वक्षेत्रांगीकरणेन, इयमैदंपर्यस्य शुद्धिरित्येवंप्रकाराऽवसेयेति ॥ १२ ॥ एवं त्रयाणां सद्धर्मपरीक्षकाणां सप्रपंचं लक्षणमभिधाय तद्गतदेशनाविधिमाह—

बालादिभावमेवं सम्यग् विज्ञाय देहिनां गुरुणा । सद्धर्मदेशनाऽपि हि कर्त्तव्या तदनुसारेण ॥ १३ ॥

बालादीनां भावः-परिणामविशेषः स्वरूपं वा तं एवं-उक्तनीत्या सम्यग्-अवैपरीत्येन विज्ञाय-अवबुध्य देहिनां-जीवानां गुरुणा-शास्त्राभिहितस्वरूपेण, यथोक्तं-"धर्म्मज्ञो धर्म्मकर्त्ता च, सदा धर्म्मप्रवर्त्तकः। सत्वेभ्यो धर्म्मशास्त्रार्थदेशको गुरुरुच्यते॥१॥" सद्धर्मस्य देशनाऽपि हि-प्रतिपादना कर्त्तव्या तदनुसारेण-बालादिपरिणामानुरूपेण, यस्य यथोपकाराय संपद्यते देशना तस्य तथा विधेयेति ॥ १३ ॥ अत्रैव हेतुद्वारेण व्यतिरेकमाह—

यद्भापितं मुनींद्रैः पापं खलु देशना परस्थाने । उन्मार्गनयनमेतद् भवगहने दारुणविपाकम् ॥ १४ ॥

यद्-यस्माद् भाषितम्-उक्तं मुनींद्रैः-समयज्ञैः पापं खलु वर्त्तते देशना परस्थाने-बालसंबंधिनी मध्यमबुद्धेः तत्संबंधिनी बुधस्य स्थाने, किमित्याह-उन्मार्गनयनं-उन्मार्गप्रापणं एतद्-विपरीतदेशनाकरणं भवगहने-संसारगहने दारुणविपाकं-तीव्रविपाकं, ते हि विपरीतदेशनया अन्यथा चान्यथा च प्रवर्त्तेत इतिकृत्वा ॥ १४ ॥ कथं पुनर्देशना स्वरूपेण समयोक्तत्वेन सुंदराऽपि

१ अन्यस्यादृष्टार्थाभिधानशक्त्यभावात् २ अपरिणामस्यातिपरिणामस्य वा जननात् ३ कुशीलताया महानर्थहेतुत्वप्रतिपादनात्

सती परस्थाने पापमित्याह—

हितमपि वायोरौपधमहितं तत् श्लेष्मणो यथाऽत्यंतम् । सद्धर्मदेशनौपधमेवं वालाद्यपेक्षमिति ॥ १५ ॥

हितमपि-योग्यमपि वायोः-शरीरगतस्य वातस्य औपधं-स्नेहपानादि, अहितं तदेवौपधं श्लेष्मणो यथाऽत्यंतं भवति, तत्प्रकोपहेतुत्वेन, सद्धर्म्मदेशनौपधं-स्वरूपेण सुंदरमपि तदनज्ञानहेतुत्वेन एवमहितं वालाद्यपेक्षमिति-वालमध्यमवुद्धिवुधापेक्षं, तस्मात्तदपायभीरुणा तद्धितप्रवृत्तेन च गुरुणा तेषां भावं विज्ञाय देशना विधेयेति शास्त्रोपदेशः ॥ १५ ॥ पूर्वोक्तमर्थं निगमयति—

एतद्विज्ञायैवं यथोचितं शुद्धभावसंपन्नः । विधिवदिह यः प्रयुंक्ते करोत्यसौ नियमतो वोधिम् ॥ १६ ॥

एतद्-देशनागतं विज्ञाय-अवबुध्य एवम्-उक्तनीत्या यथोचितं-यथार्हं शुद्धभावसंपन्नो गुरुः विधिवद्-विधिना यः प्रयुंक्ते-प्रवर्त्तयति वालादिविपये करोति-जनयति असौ-गुरुः नियमतो-नियमेन वोधिमिति ॥१६॥ ॥ इति प्रथम पोडशकम् ॥

## ॥ अथ द्वितीयं पोडशकम् ॥

'गुरुर्वालादीनां देशनां विदधाती'त्युक्तं, तत्र विधिमाह—

वालादीनामेपां यथोचितं तद्विदो विधिर्गीतः । सद्धर्म्मदेशनायामयमिह सिद्धांततत्त्वज्ञैः ॥ १ ॥

वालादीनामेपां-पूर्वोक्तानां यथोचितं-यथार्हं तद्विदो-वालादिस्वरूपविदो विधिर्गीतः-कथितः सद्धर्म्मदेशनायां विपये अयमिह-वक्ष्यमाणः सिद्धांततत्त्वज्ञैः-आगमपरमार्थनिपुणैरिति ॥ १ ॥ तत्र वालस्य परिणाममाश्रित्य हितकारिणीं देशनामाह—

वाह्यचरणप्रधाना कर्त्तव्या देशनेह बालस्य । स्वयमपि च तदाचारस्तदग्रतो नियमतः सेव्यः ॥ २ ॥

बाह्यचरणप्रधाना–बाह्यानुष्ठानप्रवरा कर्त्तव्या–विधेया देशना–प्ररूपणा इह प्रक्रमे बालस्य–आद्यस्य धर्म्मार्थिनः, स्वयमपि च–आत्मनापि च तदाचारः–स चासावाचारश्चोपदिश्यमानाचारः तदग्रतो–बालस्याग्रतः नियमतो–नियमेन सेव्यो–भवत्याचरणीयः, यदि पुनः स्वयमन्यथा सेव्यते अन्यथा चोपदिश्यते तदा तद्वितथाशंकां जनयति, अतस्तद्भाववृद्धये समुपदिश्यमानं तथैवासेव्यमिति[1] ॥२॥ तामेव बालस्य देशनामाह

सम्यग् लोचविधानं ह्यनुपानत्कत्वमथ धरा शय्या। प्रहरद्वयं रजन्याः स्वापः शीतोष्णसहनं च ॥ ३ ॥
षष्ठाष्टमादिरूपं चित्रं बाह्यं तपो महाकष्टम् । अल्पोपकरणसंधारणं च तच्छुद्धता चैव ॥ ४ ॥
गुर्वी पिंडविशुद्धिश्चित्रा द्रव्याद्यभिग्रहाश्चैव । विकृतीनां संत्यागस्तथैकासिक्थादिपारणकम् ॥ ५ ॥
अनियतविहारकल्पः कायोत्सर्गादिकरणमनिशं च । इत्यादि बाह्यमुच्चैः कथनीयं भवति बालस्य ॥ ६ ॥

सम्यग् लोचविधानं–लोचकरणं कथनीयं भवतीति योगः, हिशब्दश्चार्थे सर्वत्राभिसंबंधनीयः, अनुपानत्कत्वं च–न विद्येते उपानहौ यस्य सोऽयमनुपानत्कस्तद्भावस्तत्त्वं, अथ धरा शय्या धरा–पृथ्वी सैव शय्या–शयनीयं, नान्यत् पर्यंकादि, प्रहरद्वयं रज-

---

१ स्वयमुपदिश्यमानाचाराकरणे वितथाशंकया श्रोतुर्मिथ्यात्ववृद्धिप्रसंगात् २ तथानुकूलप्रतिकूलपरीषहतितिक्षा

न्यायः स्वापः–प्रथमयामे स्वाध्यायकरणं, सामान्येनैव साधूनां, द्वितीयतृतीयप्रहरयोस्तुत्स्वापः–स्वपनं, चतुर्थे पुनः स्वाध्यायकरणं, समयनीत्या शीतोष्णसहनं च शीतोष्णयोः सहनं, स्वसामर्थ्यापेक्षया आर्त्तध्यानादिपरिहारेण ॥३॥ षष्ठाष्टमादिरूपं समयप्रसिद्धं चित्रं–नानाप्रकारं बाह्यं तपो महाकष्टम्–दुरनुचरमल्पसत्त्वैर्दुर्बलसंहननैश्चेतिकृत्वा, अल्पोपकरणसंधारणं च–अल्पमेवोपकरणं, तच्छुद्धता चैव उद्गमादिदोषविशुद्ध्या ॥ ४ ॥ गुर्वी पिंडविशुद्धिः आधाकर्मादित्यागेन, चित्रा द्रव्याद्यभिग्रहाश्चैव, द्रव्यक्षेत्रकालभावाभिग्रहाः समयप्रसिद्धाः, विकृतीनां संत्यागः क्षीरादीनां, तथैकसिक्थादिपारणकं एकं सिक्थं यत्र तदेकसिक्थं भोजनं पारणके, आदिशब्दादेककवलादिग्रहः। अनियतविहारकल्पः–अनियतश्चासौ विहारश्च–नैकक्षेत्रवासित्वं तस्य कल्पः–समाचारः, कायोत्सर्गादिकरणमनिशं च कायोत्सर्गस्यआदिशब्दात्त्रिपदाकरणम्–आसेवनं, इत्यादि बाह्यमुच्चैः–बाह्यमनुष्ठानं प्रतिश्रयप्रत्युपेक्षणप्रमार्जनकालग्रहणादि, कथनीयं भवति बालस्य—सर्व्वथोपदेष्टव्यं हितंकारीति ॥ ६ ॥ इदानीं मध्यमबुद्धेर्देशनाविधिमाह–

**मध्यमबुद्धेस्त्वीर्यासमितिप्रभृति त्रिकोटिपरिशुद्धम् । आद्यंतमध्ययोगैर्हितदं खलु साधुसद्वृत्तम् ॥ ७ ॥**

मध्यमबुद्धेस्तु–मध्यबुद्धेः पुनः ईर्यासमितिप्रभृति–ईर्यासमित्यादिकं प्रवचनमातृरूपं साधुसद्वृत्तं समाख्येयमिति योगः, तच्च कीदृशं साधूनां सद्वृत्तं?–त्रिकोटिपरिशुद्धं–रागद्वेषमोहत्रयपरिशुद्धं, अथवा तिस्रः कोटयो—हननपचनक्रयणरूपाः कृतकारि-

1 सम्यग् यथोपदेशं लोचविधानं यतीनामावश्यकं, हिशब्दश्चार्थे, सर्वत्र संबंनीयः, अनुपानत्कत्वं च पादत्राणरहितभावश्च, अथ धरैव शय्या, नान्यत्पर्यंकादि, रजन्या. प्रहरद्वय द्वितीयतृतीयौ प्रहरावेव स्वापः शयनं, प्रथमचतुर्थयोः स्वाध्याय एव प्रवृत्तेः, शीतोष्णसहनं 2 नवकल्पादिनीत्या च

तानुमतिभेदेन श्रूयते ताभिः परिशुद्धं, अथवा कपच्छेदतापकोटित्रयपरिशुद्धं, प्रवचनमात्रंतर्गतत्वात् सकलप्रवचनस्य, तस्य च कपच्छेदतापपरिशुद्धत्वेनाभिधानात्, तदेव च वचनमनुष्ठीयमान सद्वृत्त, साधुसद्वृत्तमेव विशिष्यते—आद्यतमध्ययोगैर्हितद खल्विति आदियोगेन मध्ययोगेनान्तयोगेन वा वयसो जीवितव्यस्य वा हितदं—उपकारि, अथवा आदियोगेन—प्रथमवयोऽवस्थागतेनाध्ययनादिना मध्ययोगेन—द्वितीयवयोऽवस्थाभाविनाऽर्थश्रवणादिना अतयोगेन—चरमवयोऽवस्थाभाविना धर्म्मध्यानादिना भावनाविशेपरूपेणे हितद—हितकारि हितफलमेवेति ॥ ७ ॥ एतदेवाह

अष्टौ साधुभिरनिशं मातर इव मातरः प्रवचनस्य। नियमेन न मोक्तव्याः परमं कल्याणमिच्छद्भिः ॥८॥
एतत्साचिवस्य सदा साधोर्नियमान्न भवभयं भवति। भवति च हितमत्यंतं फलदं विधिनाऽऽगमग्रहम् ।९।
गुरुपारंतन्त्र्यमेव च तद्बहुमानात्सदाशयानुगतम् । परमगुरुप्राप्तेरिह बीजं तस्माच्च मोक्ष इति ॥ १० ॥
इत्यादि साधुवृत्तं मध्यमबुद्धेः सदा समाख्येयम्। आगमतत्त्वं तु परं बुधस्य भावप्रधानं तु ॥ ११ ॥

अष्टौ साधुभिरनिशं—प्रवचनस्य मातरो न मोक्तव्या इति संबंधः, ताश्च मातर इव, पुत्रस्येति गम्यते, प्रवचनस्य, प्रसूतिहेतुत्वेन हितकारित्वेन च मातृत्वमवसेय, नियमेन—अवश्यभावेन, कीदृक्षैः साधुभिः?—परमं—निरुपम कल्याणमिच्छद्भिः—गेह-

१ आद्यतमध्ययोगैर्वयोऽवस्थात्रयगतैरध्ययनार्थश्रवण धर्मध्यानादिधर्मव्यापारैः 'आपीलय निप्पीलय' इत्यागमात् तद्विरोध्यदमध्यमविकृष्टतपोविशेषरूपैर्वा हितद भवति ॥ ७ ॥

लौकिकपारलौकिकपरमकल्याणकामैः ॥८॥ एतच्च समाख्येयम्-एतत्सचिवस्य-प्रवचनमातृसहितस्य सदा-सर्व्वकालं साधोः-यतेर्नियमात्-नियमेन न भवभय भवति-संसारभयं न जायते, निःश्रेयसाविपर्येच्छानिष्पत्तेः, भवति च-संपद्यते च, प्रवचनमातृविधानसंपन्नस्य हितं भाव्यपायपरिहारसारत्वेन अत्यंतं-प्रकर्षवृत्त्या फलदं-फलहेतुः विधिना-विनयबहुमानादरादिना आगमग्रहणं-वाचनादिरूपेणेति ॥९॥ आगमग्रहणस्य गुर्व्वधीनत्वात् तद्गतमप्युपदेष्टव्यमित्याह-गुरुपारतंत्र्यमेव च-गुर्वायत्तत्वं तद्बहुमानात्-गुरुविषयाऽऽन्तरप्रीतिविशेषात् सदाशयानुगतं-सदाशयः-संसारक्षयहेतुर्गुरुरयं ममेत्येवंभूतः कुशलपरिणामस्तेनानुगतं गुरुपारतंत्र्यं परमगुरुप्राप्तेरिह-सर्व्वज्ञप्राप्तेर्बीजं, गुरुबहुमानाज्जन्मांतरे तथाविधपुण्योपादानेन सर्वज्ञदर्शनसंभवात् गुरुपारतंत्र्यं सर्व्वज्ञप्राप्तिबीजं भवति, तस्माच्च-एवंविधाद् गुरुपारतंत्र्यात् मोक्षः ॥ १० ॥ पूर्वोक्त एव वस्तुनि सद्वृत्तादौ क्रियासंबंधं दर्शयति-मध्यमबुद्धेरेवमादि साधुवृत्तं-प्रस्तुतं सदा समाख्येयं-प्रकाशनीयं, आगमतत्त्वं तु-पूर्वोक्तं परं-केवलमेव बुधस्य-प्राङ्निरूपितस्य भावप्रधानं तु समाख्येयमिति ॥ ११ ॥ कृतसंबंधमेव बुधोपदेशमाह—

वचनाराधनया खलु धर्मस्तद्बाधया त्वधर्म इति । इदमत्र धर्मगुह्यं सर्वस्वं चैतदेवास्य ॥ १२ ॥

---

१ तद्विरोध्युत्कटनिःश्रेयसार्थानिष्पत्तेः २ मण्डलिनिषद्यादिरूपेण सूत्रोद्देशेन आगमग्रहणं वाचनादिव्यापारेणाधिकारिकर्तृकत्वात्, प्रवचनमातृरहितस्य व्रततथात्वादागमग्रहणमत्यंतफलदं न भवति ३ तद्बहुमानाद् गुरुविषयांतरप्रीतिविशेषात्, नतु विष्टिमात्रज्ञानात् । सदाशयेन-भवक्षयहेतुरयं मे गुरुरित्येवंभूतशोभनपरिणामेन, नतु आत्मादिसमसंबन्धज्ञानेनानुगत-सहित ५ इति हेतोर्गुरुपारतंत्र्यं साधुनाऽवश्यं विधेयमिति सोपस्कारं व्याख्येयं

वचनाराधनया-आगमाराधनयैव, खलुशब्द एवकारार्थः, धर्मः-श्रुतचारित्ररूपः संपद्यते, तद्बाधया तु-वचनबाधया तु अधर्म्म इति इदमत्र-विधिप्रतिषेधरूपं वचनमागमाख्यं धर्म्मगुह्यं-धर्म्मरहस्यं सर्व्वस्वं चैतदेवास्य-अस्य धर्म्मस्य एतद्वचनमेव सर्वस्वं-सर्वसारो वर्त्तते इति ॥ १२ ॥ अथ किमर्थं बुधस्यैवमुपदेशः क्रियते सकलानुष्ठानोपसर्जनीभावापादनद्वारेणेत्याशंक्य तन्मूलत्वं सकलानुष्ठानानामुपदर्शयन्नाह—

यस्मात् प्रवर्त्तकं भुवि निवर्त्तकं चांतरात्मनो वचनम् । धर्मश्चैतत्संस्थो मौनींद्रं चैतदिह परमम् ॥१३॥

यस्मात् प्रवर्त्तकं स्वाध्यायध्यानादिषु विधेयेषु भुवि-भव्यलोके निवर्त्तकं च हिंसानृतादिभ्यः सकाशाद् अंतरात्मनो-मनसो वचनं-आगमरूपं, धर्म्मश्चैतत्संस्थो-वचनसंस्थो, वचने संतिष्ठत इतिकृत्वा, मौनींद्रं चैतद्-वचनं इह-प्रक्रमे परमं-प्रधानं, एतदुक्तम्-"सर्व्वज्ञोक्तेन शास्त्रेण, विदित्वा योऽत्र तत्त्वतः । न्यायतः क्रियते धर्म्मः, स धर्म्मः स च सिद्धये ॥१॥" ॥१३॥ किमेवं वचनमाहात्म्यं ख्याप्यत इत्याह—

अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनींद्र इति। हृदयस्थिते च तस्मिन्नियमात् सर्वार्थसंसिद्धिः १४

अस्मिन्-प्रवचने आगमे हृदयस्थे सति-हृदयप्रतिष्ठिते सति हृदयस्थः-चित्तस्थस्तत्त्वतः-परमार्थेन मुनींद्रः-सर्व्वज्ञ इतिकृत्वा,

१ महाकष्टकारिणोऽप्यधर्म इति हेतोः इदं विधिनिषेधरूपं वचनं धर्मगुह्यं-धर्मरहस्यं, सर्वस्व-सर्वसारश्चैतदेव वचनमेवास्य धर्मस्य २ धर्मश्च प्रवृत्तिनिवृत्तिफलजननव्यापारीभूत एतस्मिन् वचने ज्ञापकतासंबंधेन संदिष्ट इत्येतत्संस्थः ३ मुनींद्रेणोक्तेनाबाधितप्रामाण्यं चैतद्वचनमिह प्रक्रमे परमं ४ अनुष्ठानानुपजीविप्रामाण्यं, तत इदमेव प्रधानमुद्घुष्यते अनुष्ठानादिकं चैतदुपजीवकत्वेनोपसर्जनीक्रियत इति भावः ५ स्मृतिद्वारा तत्त्वतोमुनींद्रः स्वतंत्रवक्तृत्वरूपतत्संबंधशालित्वात्

हृदयस्थिते च तस्मिन्-भगवति मुनींद्रे नियमात्-नियमेन सर्व्वार्थसंसिद्धिः-सर्वार्थनिष्पत्तिः ॥ १४ ॥ किमेवं सर्वप्रयोजनसिद्धिद्वारेण भगवान् संस्तूयत इत्याह—

**चिंतामणिः परोऽसौ तेनैव भवति समरसापत्तिः । सैषेह योगिमाता निर्वाणफलप्रदा प्रोक्ता ॥ १५ ॥**

चिंतारत्नं चिंतामणिः परः-प्रकृष्टोऽसौ भगवान् सर्वज्ञस्तेन[1] भगवता एवमागमबहुमानद्वारेण भवति-जायते समरसापत्तिः-समतापत्तिः, आगमाभिहितसर्व्वज्ञस्वरूपोपयोगोपयुक्तस्य तदुपयोगानन्यवृत्तेः परमार्थतः सर्वज्ञरूपत्वाद्, बाह्यालंबनाकारोपरक्तत्वेन मनसः समापत्तिः-ध्यानविशेषरूपा, तत्फलभूता वा समरसापत्तिरित्यभिधीयते, यथोक्तं योगशास्त्रे-"क्षीणवृत्तेरभिजात्यस्येव मणेर्ग्राह्यग्रहीतृग्रहणेषु तत्स्थतदञ्जनता समापत्तिः" सैषेह[2]-प्रस्तुता समापत्तिरभिसंबध्यते योगिमाता-योगिजननी, योगी चेह सम्यक्त्वादिगुणः पुरुषः, यथोक्तं-"सम्यक्त्वज्ञानचारित्रयोगः सद्योग उच्यते । एतद्योगाद्धि योगी स्यात्, परमब्रह्मसाधकः ॥ १ ॥" सैव विशिष्यते-निर्वाणफलप्रदा-निर्वाणकार्यप्रसाधनी प्रोक्ता, तद्वेदिभिराचार्यैः ॥१५॥ बालादीनां सद्धर्म्मदेशनाविधिरधिकृतः, तमेव निगमयन्नाह-

**इति यः कथयति धर्मं विज्ञायौचित्ययोगमनघमतिः । जनयति स एनमतुलं श्रोतृषु निर्वाणफलदमलम् ॥ १६ ॥**

इति यः कथयति धर्म्मं-एवमुक्तनीत्या यो गुरुः धर्म्मं कथयति विज्ञाय-ज्ञात्वा औचित्ययोगं-औचित्यव्यापारं तत्संबंधं वा अनघमतिः-निर्दोषबुद्धिः जनयति स गुरुः एनं-धर्म्मं अतुलं-अनन्यसदृशं श्रोतृषु-शुश्रूषाप्रवृत्तेषु निर्वाणफलदं-मोक्षफल-

---

1 तेनेयं सर्वत्र पुरस्क्रियमाणागमसंबंधोद्बोधितसंस्कारजनितभगवद्हृदयस्थता समरसापत्तिः समतापत्तिर्भवति, रसशब्दोऽत्र भावार्थः, 2 सा च मयि तद्रूपं स एवाहमित्यादिध्यानोल्लिख्यमानवैज्ञानिकसंबंधविशेषरूपा

प्रदं अलं-अत्यर्थमिति ॥ १६ ॥ २ ॥ इति द्वितीयं षोडशकम् ॥

## ॥ अथ तृतीयं षोडशकम् ॥

बालादीनां सद्धर्म्मदेशनाविधिर्गुरोरुक्तः, तत्र धर्म्मस्वलक्षणाभिधित्सया संबंधमुपरचयति प्रकरणकारः—

**अस्य स्वलक्षणमिदं धर्मस्य बुधैः सदैव विज्ञेयम् । सर्वागमपरिशुद्धं यदादिमध्यांतकल्याणम् ॥ १ ॥**

अस्य-धर्मस्य स्वलक्षणं-लक्ष्यते तदितरव्यावृत्तं वस्त्वनेनेति लक्षणं स्वं च तल्लक्षणं चेति स्वलक्षणं इदं-वक्ष्यमाणं बुधैः-विद्वद्भिः सदैव-सर्वकालमेव विज्ञेयं, सर्वकालव्याप्त्या लक्षणस्यान्यथात्वाभावमुपदर्शयति, सर्वागमैः परिशुद्धं-निर्दोषं यदादिमध्यांतकल्याणं-आदिमध्यावसानेषु सुंदरमिति योऽर्थः ॥ १ ॥ किं पुनर्द्धर्म्मस्य स्वलक्षणमित्याह—

**धर्मश्चित्तप्रभवो यतः क्रियाऽधिकरणाश्रयं कार्यम् । मलविगमेनैतत् खलु पुष्ट्यादिमदेष विज्ञेयः ॥ २ ॥**

प्रभवत्यस्मादिति प्रभवः, चित्तरूपत्वाच्चित्तहेतुकत्वाच्च चित्तः, स चासौ प्रभवश्च चित्तप्रभवः स धर्म्मो विज्ञेयः, विशेषणसमासांगीकरणाद्यच्छब्देन चित्तमेव परामृश्यते, यतः-चित्तात् क्रिया प्रवर्त्तते विधिप्रतिषेधविषया, सा च क्रिया कार्यं, चित्तनिष्पाद्यत्वात्[1], तच्च स्वरूपेण क्रियालक्षणं कार्यं कीदृशं यच्चित्तात्प्रवर्त्तेत इत्याह-'अधिकरणाश्रयं' इह यद्यप्यधिकरणशब्दः सामान्येनाधारवचनस्तथापि प्रक्रमाच्चित्तस्याधिकरणं—आश्रयः शरीरं, चित्तस्य शरीराधारत्वात्, क्रियालक्षणं कार्यमधिकरणाश्रयं—शरीराश्रयं यतः प्रवर्त्तते

१ सामान्यतस्तस्य सार्वतन्त्रिकत्वात् तथा यत् स्वलक्षणमादिमध्यांतेषु कल्याणमतरालाप्रासे सदा सुंदरमित्यर्थः. २ कार्यं भवनिर्वेदादि भवति एष मार्गानुसारी धर्मो एक्ष्यो, नत्वभव्यादिगतोऽपि

चित्तात् तच्चित्तं धर्म्म इत्युक्तं । चित्तात्प्रभवतीति पुनरुच्येत चित्तस्य एतत्पुष्ट्यादिमदित्यनेन सह संबंधो न स्यात्, यत इत्यनेनापि केवलमेव चित्तं न गृह्येत, तथा धर्म्मस्यैव विशेष्यत्वं स्यात्, न चित्तस्य, ततश्च चित्तस्य विशेषणपदैरभिसंबंधो न स्यादिति दोषः । गतदेव-चित्तं मलविगमेन-रागादिमलापगमेन पुष्ट्यादिमत्-पुष्टिशुद्धिद्वयसमन्वितं एष-धर्म्मो विज्ञेय इति ॥ २ ॥ 'मलविगमेनैतत् खलु पुष्टिम' दित्युक्तं, तत्र के मलाः? कथं च पुष्ट्यादिमत्त्वं चित्तस्येत्येवं वक्तुकामनायां श्रोतुरिदमाह—

**रागादयो मलाः खल्वागमसद्योगतो विगम एषाम् । तदयं क्रियाऽत एव हि पुष्टिः शुद्धिश्च चित्तस्य॥३॥**

इह मलाः प्रक्रमात् चित्तस्यैव संबंधिनः परिगृह्यंते, ते च रागादयो-रागद्वेषमोहा जातिसंगृहीताः, व्यक्तिभेदेन तु भूयांसः, खलुशब्दस्यावधारणार्थत्वाद्रागादय एव, नान्ये, आगमनमागमः-सम्यक्परिच्छेदस्तेन सद्योगः-सद्व्यापारः आगमसहितो वा यः सद्योगः-सत्क्रियारूपः ततः सकाशाद्विगम एषां-रागादीनां मलानामपगमः संजायते, तत्-तस्माद् अयम्-आगमसद्योगः क्रिया वर्त्तते, सर्वापि शास्त्रोक्ता विधिप्रतिषेधात्मिका, अत एव ह्यागमसद्योगात् क्रियारूपात् पुष्टिः-वक्ष्यमाणस्वरूपा शुद्धिश्च चित्तस्य संभवति ॥ ३ ॥ पुष्टिशुद्ध्योर्लक्षण दर्शयति—

**पुष्टिः पुण्योपचयः शुद्धिः पापक्षयेण निर्मलता । अनुबंधिनि द्वयेऽस्मिन् क्रमेण मुक्तिः परा ज्ञेया ॥४॥**

उपचीयमानपुण्यता पुष्टिरभिधीयते, शुद्धिः पापक्षयेण निर्म्मलता-पापं ज्ञानावरणीयादि च सम्यग्ज्ञानादिगुणविघात-

१ क्रियाया कारणे कार्योपचारादत एव सत्क्रियारूपमलविगमात्

हेतुर्घातिकर्म्मोच्यते, तत्क्षयेण यावती काचिद्देशतोऽपि निर्म्मलता संभवति सा शुद्धिरुच्यते, अनुबंधः-संतानः प्रवाहोऽविच्छेद इत्यनर्थांतरं स विद्यते यस्य द्वयस्य तदिदमनुबंधि तस्मिन् पुष्टिशुद्धिद्वयेऽस्मिन्-प्रत्यक्षीकृते सति क्रमेण-आनुपूर्व्या पुण्योपचयपापक्षयाभ्यां प्रवर्द्धमानाभ्यां तस्मिन् जन्मनि भवान्तरेषु वा प्रकृष्यमाणवीर्यस्य मुक्तिः परा-तात्त्विकी सर्व्वकर्म्मक्षयलक्षणा ज्ञेयेति ॥४॥ कथं पुनरिदमनुबन्धि द्वयं न भवतीत्याह—

न प्रणिधानाद्याशयसंविद्व्यतिरेकतोऽनुबन्धि तत् । भिन्नग्रंथेर्निर्मलबोधवतः स्यादियं च परा ॥५॥

प्रणिधानाद्याशयसंविद्व्यतिरेकत इति-प्रणिधानादयश्च ते आशयाश्च-वक्ष्यमाणाः पञ्चाध्यवसायस्थानविशेषास्तेषां संवित्-संवित्तिः संवेदनमनुभवस्तस्या व्यतिरेकः-अभावस्तस्मात्तदाशयसंविद्व्यतिरेकेण एतद्द्वयं पुष्टिशुद्धिरूपं नानुबन्धि भवति, तस्मादेतद्द्वयमनुबन्धि कर्तुकामेन प्रणिधानादिषु यतितव्यं, इयं च कस्येत्याह-भिन्नग्रंथेः-अपूर्वकरणबलेन कृतग्रन्थिभेदस्य, तत्प्रभावादेव निर्म्मलबोधवतो-विमलबोधसंपन्नस्य स्याद्-भवेत्, इयं च-प्रस्तुता प्रणिधानाद्याशयसंवित् परा-प्रधाना ॥५॥ प्रणिधानादिराशय उक्तः, तमेव संख्याविशिष्टं नामग्राहमाह—

प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभेदतः प्रायः । धर्म्मज्ञैराख्यातः शुभाशयः पञ्चधाऽत्र विधौ ॥६॥

प्रणिधिश्च प्रवृत्तिश्च विघ्नजयश्च सिद्धिश्च विनियोगश्च २ एत एव भेदाः तानाश्रित्य,, कर्म्मणि ल्यब्लोपे पञ्चमी, प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभेदतः, प्राय इति प्राचुर्येण, शास्त्रेषु धर्मज्ञैः-धर्मवेदिभिराख्यातः-कथितः शुभाशयः-शुभपरिणामः पञ्चधा-पञ्चप्रकारः अत्र-प्रक्रमे विधौ-कर्त्तव्योपदेशे, प्रतिपादिताशयपञ्चकव्यतिरेकेण पुष्टिशुद्धिलक्षणं द्वयमनुबन्धि न भवतीति ॥ ६ ॥

तत्र प्रणिधानलक्षणमाह—

**प्रणिधानं तत्समये स्थितिमत् तदधः कृपानुगं चैव । निरवद्यवस्तुविषयं परार्थनिष्पत्तिसारं च ॥ ७ ॥**

प्रणिधानं विशेष्यं शेषपदानि विशेषणानि, तत्समये—प्रतिपन्नविवक्षितधर्मस्थानमर्यादायां स्थितिमत्—प्रतिष्ठितं अविचलितस्वभावं तदधः कृपानुगं चैव—स्वप्रतिपन्नधर्मस्थानसाधः—अधस्ताद्ये वर्तन्ते जीवाः, न तावतीं धर्मपदवीमाराधयन्ति, तेषु कृपया—करुणया अनुगं—अनुगतं तेषु करुणापरं, न तु गुणहीनत्वाद्धेषु द्वेषसमन्वितं, निरवद्यवस्तुविषयं—निरवद्यं—सावद्यपरिहारेण यद्वस्तु धर्मगतं तद्विषयो यस्य, परार्थनिष्पत्तिसारं च—परोपकारनिष्पत्तिप्रधानं च, एवंस्वरूपं प्रणिधानमवसेयम् ॥७॥ इदानीं प्रवृत्तिमाह—

**तत्रैव तु प्रवृत्तिः शुभसारोपायसङ्गताऽत्यन्तम् । अधिकृतयत्नातिशयादौत्सुक्यविवर्जिता चैव ॥ ८ ॥**

तत्रैव तु—निरूपितप्रतिपन्नधर्मस्थान एव प्रवृत्तिश्चेष्टारूपा भवति, सा च न क्रियारूपा, चित्ताश्रयरूपा, शुभसारोपायसङ्गताऽत्यन्तं, पाठान्तरपक्षे विशेषणं सर्वे योजनीयं, शुभः—सुन्दरः सारः—प्रकृष्टो नैपुण्यान्वितो य उपायस्तेन सङ्गता—युक्ता, अधिकृते धर्मस्थाने यत्नातिशयात्—प्रयत्नातिशयसंभवात्ता संपद्यते, औत्सुक्यविवर्जिता चैव, औत्सुक्यं—रागाऽभिलाषातिरेकस्तेन विवर्जिता-

[illegible] मानसिकमतिवृत्ति [illegible] च २ सर्वेषां अपि सतां [illegible] ३ तत्रैवाभि- [illegible] प्रवृत्तिः ४ [illegible] ५ अधिकृते धर्मस्थाने यो यत्नातिश- [illegible] ६ [illegible]

विगहिता, प्रयत्नातिशयमेव विधत्ते, नत्वौत्सुक्यमिति भावः ॥ ८ ॥ अधुना विघ्नजयमाह—

**विघ्नजयस्त्रिविधः खलु विज्ञेयो हीनमध्यमोत्कृष्टः । मार्गे इह कण्टकज्वरमोहजयसमः प्रवृत्तिफलः ॥९॥**

विघ्नजयस्त्रिविधः खलु विज्ञेय इति, विघ्नस्य–धर्मान्तरायस्य जयः–पराभवो निराकरणं स त्रिविधः तिस्रो विधा अस्येति त्रिविधः–त्रिभेदः, खलुशब्दो वाक्यालंकारे, त्रैविध्यमेवाह–हीनमध्यमोत्कृष्टः–हीनमध्यमाभ्यां सहित उत्कृष्टः, एको हीनो विघ्नजयो अपरो मध्यमोऽपरस्तूत्कृष्ट इति, त्रैविध्यमेव निदर्शनेन साधर्म्यगर्भमाह–मार्गे इह कण्टकज्वरमोहजयसम इति, मार्गे प्रवृत्तस्य पुंसः कण्टकविघ्नजयसमो ज्वरविघ्नजयसमो मोहविघ्नजयसमः, इदमत्र तात्पर्यं–यथा नाम कस्यचित्पुरुषस्य प्रयोजनवशान्मार्गप्रवृत्तस्य कण्टकाकीर्णमार्गावतीर्णस्य कण्टकविघ्नो विशिष्टगमनविघातहेतुर्भवति, तद्रहिते तु पथि प्रवृत्तस्य गमनं निराकुलं सञ्जायते, एवं कण्टकविघ्नजयसमः प्रथमो विघ्नजयः, कण्टकाश्चेह सर्वे एव प्रतिकूलाः शीतोष्णादयो धर्म्मस्थानविघ्नहेतवः, तैरभिद्रुतस्य धर्म्मार्थिनोऽपि निराकुलप्रवृत्त्यसिद्धेः, आशयभेदश्चायं बाह्यकण्टकविघ्नजयेनोपलक्ष्यते । तथा तस्यैव ज्वरवेदनाभिभूतशरीरस्य विह्वलपादन्यासस्य निराकुलं गमनं विकीर्षोरपि कर्तुमशक्नुवतः कण्टकविघ्नादभ्यधिको ज्वरविघ्नः, तज्जयस्तु विशिष्टगमनप्रवृत्तिहेतुर्निराकुलशरीरत्वेन परिदृश्यते, इहापि ज्वरकल्पाः शारीरा एव रोगाः परिगृह्यन्ते, तदभिभूतस्य विशिष्टधर्म्मस्थानाराधनाऽक्षमत्वात्, ज्वरकल्पशरीरदुःखविघ्नजयस्तु सम्यग्धर्म्मस्थानाराधनाय प्रभवति । तस्यैवाध्वनि जिगमिषोः पुरुषस्य दिङ्मोहकल्पो मोहविघ्नस्तेनाभिभूतस्य पुनः पुनः प्रेर्यमाणस्याप्यध्वनीनैर्न गमनोत्साहः कथंचित्प्रादुर्भवति, मोहविघ्नजयस्तु स्वयमेव मार्गसम्यक्परिज्ञानात् परैश्चोद्यमान-

मार्गश्रद्धानात् मन्दोत्साहतापरित्यागेन गमनप्रवृत्तिहेतुर्भवति, इहापि दिग्मोहगमनविघ्नकल्पो मिथ्यात्वादिजनितो मनोविभ्रमः परिगृह्यते, तज्जयस्तु मिथ्यात्वादिदोषनिराकरणद्वारेण मनोविभ्रमापसारकत्वेन प्रस्तुतधर्म्ममार्गेऽनवरतप्रयाणकप्रवृत्त्या गमनाय संपद्यते, एवं कण्टकज्वरमोहविघ्नजयसमः त्रिविधो विघ्नजय उक्तः, स एव विशिष्यते–'प्रवृत्तिफलः'-प्रवृत्तिः धर्म्मस्थानविषया फलमस्याशयविशेषस्य विघ्नजयसंज्ञितस्येति प्रवृत्तिफलः ॥ ९ ॥ एवं तृतीयमाशयभेदं प्रतिपाद्य सिद्धिरूपमाशयमाह—

**सिद्धिस्तत्तद्धर्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया । अधिके विनयादियुता हीने च दयादिगुणसारा ॥ १० ॥**

सिद्धिर्नामाशयभेदः, सा च स्वरूपतः कीदृशी ?–तत्तद्धर्म्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया–तस्य तस्य विवक्षितस्य धर्म्मस्थानस्य–अहिंसादेरवाप्तिः –प्राप्तिः सिद्धिरुच्यते, सा च तात्त्विकी, इदं च विशेषणं तत्तद्धर्म्मस्थानावाप्तेरतात्त्विकत्वपरिहारार्थं, न ह्यतात्त्विकी सा सिद्धिर्भवितुमर्हति, सा च सिद्धिः अधिके–गुरुविशेषे सूत्रार्थोभयवेदिन्यभ्यस्तभावनामार्गे तीर्थकल्पे गुरौ विनयादियुता–विनयवैयावृत्त्यबहुमानादिसमन्विता, हीने च–स्वप्रतिपन्नधर्म्मस्थानापेक्षया हीनगुणे निर्गुणे वा सामान्येनैव प्राणिगणे दयादिगुणसारा–दयादानव्यसनपतितदुःखापहारादिगुणप्रधाना, अधिकगुणहीनगुणग्रहणान्मध्यमोपकारफलत्वमपि, सा सिद्धिरित्युक्तं भवति ॥१०॥ एवं सिद्धिमभिधाय तत्फलभूतमेव विनियोगमाह—

**सिद्धेश्चोत्तरकार्यं विनियोगोऽवन्ध्यमेतदेतस्मिन् । सत्यन्वयसंपत्त्या सुन्दरमिति तत् परं यावत् ॥ ११ ॥**

सिद्धेश्चोत्तरकार्यं विनियोगः–सिद्धेरुत्तरकालभावि कार्यं विनियोगो नामाशयभेदो, विज्ञेय इति संबंधनीयं, अवन्ध्यं–सफलं,

न कदाचिन्निष्फलं एतद्-धर्म्मस्थानमहिंसादि एतस्मिन् विनियोगे सति-सञ्जाते अन्वयसंपत्त्या-अविच्छेदसंपत्त्या हेतुभूतया सुन्दरमेतत्पूर्व्वोक्तं धर्म्मस्थानं, इतिशब्दो भिन्नक्रमः परमित्यनेन संबंधनीयो, यावत्परमिति तद् धर्म्मस्थानं परं-प्रकृष्टं यावत्संपन्नं, अनेन विनियोगस्यानेकजन्मान्तरसन्तानक्रमेण प्रकृष्टधर्म्मस्थानावाप्तिहेतुत्वमावेदयति, इदमत्र हृदयं-अहिंसादिलक्षणधर्म्मस्थानावाप्तौ सत्यां स्वपरयोरुपकारायाविच्छेदेन तस्यैव धर्म्मस्थानस्य विनियोगो-व्यापारः स्वात्मतुल्यपरफलकर्तृत्वमभिधीयते, एवं हि स्वयंसिद्धस्य वस्तुनो विनियोगः सम्यक्कृतो भवति यदि परस्मिन्नपि तत्सम्पद्यते, विशेषेण नियोगो-नियोजनमध्यारोपणमितिकृत्वा, आशयभेदस्यास्य विनियोगस्यावन्ध्यत्वप्रतिपादनप्रक्रियया स्वपरोपकारहेतुत्वं दर्शयति सूत्रकारः ॥ ११ ॥ एवमेतान् प्रणिधानादीनभिधाय कथंचित्क्रियारूपत्वप्राप्तावेषामाशयविशेषत्वसमर्थनायाह—

**आशयभेदा एते सर्वेऽपि हि तत्त्वतोऽवगन्तव्याः । भावोऽयमनेन विना चेष्टा द्रव्यक्रिया तुच्छा ॥१२॥**

आशयभेदा-आशयप्रकारा एते-पूर्वोक्ताः सर्व्वेऽपि हि-सर्व्व एव कथंचित्क्रियारूपत्वेऽपि तदुपलक्ष्यतया तत्त्वतः-परमार्थेनावगन्तव्या-विज्ञेयाः परिणामविशेषा एत इति, 'शुभाशयः पञ्चधाऽत्र विधा' वित्युक्तं, स किं भावादपरोऽथ भाव एवेत्याशंकायामिदमाह-भावोऽयमिति, अयं-पञ्चप्रकारोप्याशयो भाव इत्यभिधीयते, अनेन-भावेन विना चेष्टा-व्यापाररूपा कायवाङ्मनःसङ्गता द्रव्यक्रिया तुच्छा-भावविकला क्रिया द्रव्यक्रिया तुच्छा-असारा. स्वफलासाधकत्वेन ॥ १२ ॥ कस्मात्पुनर्द्रव्यक्रियायास्तुच्छत्वा-

१ भंगेऽपि गुवर्णघटन्यायेन सर्वथा फलानपगमाद्विनियोजितधर्मोपगमेऽपि भूयो प्राप्तिरिति तत्संस्कारोद्बोधसंभवादनेकजन्मान्तरसन्तानक्रमेणाविच्छेदसंगतया. २ एवंभूतं तु स्वात्मतुल्यपरफलकर्तृत्वमित्यत्रसेयं.

पादनेन भावप्राधान्यमाश्रीयत इत्याह—

**अस्माच्च सानुबन्धाच्छुद्ध्यन्तोऽवाप्यते द्रुतं क्रमशः । एतदिह धर्मतत्त्वं परमो योगो विमुक्तिरसः॥१३॥**

अस्माच्च-पूर्वोक्ताज्ञाद्याशयपञ्चकरूपात् 'सानुबंधात्' अनुबन्धः-सन्तानस्तेन सह वर्त्तते यो भावः स सानुबंधस्तदविनाभूतः स चाव्यवच्छिन्न सन्तानः, तस्मादेवंविधाद् भावात् शुद्धेरन्तः-प्रकर्षः शुद्ध्यन्तोऽवाप्यते-प्राप्यते द्रुतं-अविलंबितं, प्रभूतकालात्ययविगमेन, क्रमशः-क्रमेणानुपूर्व्या, तस्मिन् जन्मन्यपरस्मिन् वा कर्म्मक्षयप्रकर्षो लभ्यते, ननु चैष एव भावो धर्म्मपरमार्थ आहोस्विदन्यद्धर्मतत्त्वमित्यारेकायां परस्य निर्व्वचनमाह-एतदिह धर्म्मतत्त्वं, अत्र यद्यपि भावस्य प्रस्तुतत्वादेतदित्यत्र पुंलिङ्गतायामेष इति निर्देशः प्राप्नोति तथापि धर्म्मतत्त्वमित्यस्य पदस्य प्राधान्यापेक्षया नपुंसकनिर्देशः, अर्थस्तु एतदिह प्रस्तुतं भावस्वरूपं धर्म्मतत्त्वं, नान्यत्, 'परमो योग' इति अयं भावः परमो योगो वर्त्तते, स च कीदृक्?-विमुक्तिरसः विशिष्टा मुक्तिर्विमुक्तिस्तद्विषयो रसः-प्रीतिविशेषो यस्मिन् योगे स विमुक्तिरसः, विमुक्तौ रसोऽस्येति वा गमकत्वात्समासः, अथवा पृथगेव पदान्तरं, न विशेषणं, तेनायं भावो-विमुक्तौ रसः-प्रीतिविशेषो विमुक्तिरस उच्यते, एतदुक्तं भवति-भाव एव च परमो योगो, भाव एव च विमुक्तिरस इति ॥ १३ ॥ ननु च 'भावाच्छुद्ध्यन्तोऽवाप्यत' इत्युक्तं, शुद्धिश्च पापक्षयेण प्रागुक्ता, कथं पुनः पापमतीतेऽनादौ काले यद्भूयो भूय आसेवितं तत्त्यक्त्वा भावमेवाभिलषति,? न पुनः पापं बहु मन्यत इत्याह—

**अमृतरसास्वादज्ञः कुभक्तरसलालितोऽपि बहुकालम् । त्यक्त्वा तत्क्षणमेनं वाञ्छत्युच्चैरमृतमेव ॥ १४ ॥**

एवं त्वपूर्वकरणात् सम्यक्त्वामृतरसज्ञ इह जीवः। चिरकालासेवितमपि न जातु बहु मन्यते पापम्।१५।
यद्यपि कर्मनियोगात् करोति तत् तदपि भावशून्यमलम्। अत एव धर्मयोगात् क्षिप्रं तत्सिद्धिमाप्नोति।१६।

अमृतरसस्यास्वादस्तं जानातीत्यमृतरसास्वादज्ञः 'कुभक्तरसंलालितोऽपि' कुभक्तानां–कदशनानां यो रसस्तेन लालितोऽपि-अभिरमितोऽपि पुरुषो बहुकालं-प्रभूतकालं नैरन्तर्यवृत्त्या, अत एव "कालाध्वनोरत्यन्तसंयोगे" द्वितीया, त्यक्त्वा-परित्यज्य तत्क्षणं-तस्मिन्नेव क्षणे शीघ्रमेनं–कुभक्तरसममृतरसज्ञत्वेन वांछति–अभिलषत्युच्चैरमृतमेव, सुरभोज्यममृतमभिधीयते, तद्धि सर्व्वरससंपन्नत्वात् स्पृहणीयमतितरां भवति ॥ १४ ॥ एवं त्वपूर्वकरणात्–एवमेवापूर्वकरणाद् अपूर्वपरिणामात् 'सम्यक्त्वामृतरसज्ञ इह जीवः' सम्यक्त्वामृतरसमनुभवद्वारेण जानातीति तज्ज्ञ उच्यते, चिरकालासेवितमपि–प्रभूतकालाभ्यस्तमपि न जातु-न कदाचिद् बहु मन्यते–बहुमानविषयीकरोति पापं–मिथ्यादर्शनमोहनीयं तत्कार्यं वा प्रवचननोपघातादि, इह च कुभक्तरसकल्पं पापमिथ्यात्वादि, अमृतरसास्वादकल्पो भावः सम्यक्त्वादिरवसेय इति ॥ १५ ॥ 'सम्यक्त्वामृतरसज्ञो जीवः पापं न बहु मन्यत' इत्युक्तं, तत्र सम्यग्दृष्टिरपि विरतेरभावात् पापं कुर्वन् दृश्यत एवेत्याशंक्याह— यद्यपि–कथंचित् कर्मनियोगात्-कर्म्मव्यापारात् करोति-विदधाति तत्-पापं 'तदपि भावशून्यमलं' तदपि-क्रियमाणं पापं भावशून्यं, इह पापप्रवृत्तिहेतुर्भावः क्लिष्टाध्यवसायस्तेन शून्यं, अलं-भत्यर्थं, सम्यग्दृष्टिर्हि पापं कुर्वाणोऽपि न भावतो बहु मन्यते, यथेदमेव सांप्रतमिति, अत एव पापाबहुमानद्वारेण धर्मयोगाद्

१ मतः सम्यग्दृष्टेर्मात्मोऽदयस्यानुरुध्या पापे प्रवृत्तिरभ्यासिनीति, न बहुमान इत्यर्थः

धर्मोत्साहाद् धर्मसंबंधाद्वा क्षिप्रम्-अचिरेण तत्सिद्धिमाप्नोति-धर्मनिष्पत्तिमवाप्नोति ॥ १६

## ॥ इति तृतीयं षोडशकम् ॥



'अस्य स्वलक्षणमिदं धर्मस्ये' त्युक्तं प्राक्, तत्रास्यैव धर्मस्वतत्त्वस्य विस्तरेण लिंगान्याह—

**सिद्धस्य चास्य सम्यग् लिंगान्येतानि धर्मतत्त्वस्य । विहितानि तत्त्वविद्भिः सुखावबोधाय भव्यानाम् ॥१॥**

सिद्धस्य च-निष्पन्नस्य च अस्य-प्रत्यक्षीकृतस्य-सम्यग्-अवैपरीत्येन प्रशस्तानि लिंगानि-लक्षणानि एतानि वक्ष्यमाणानि धर्मतत्त्वस्य-धर्मस्वरूपस्य विहितानि-शास्त्रेऽभिहितानि तत्त्वविद्भिः-परमार्थवेदिभिः सुखावबोधाय-सुखपरिज्ञानाय, येन तानि सुखेनैव बुध्यन्ते, भव्यानां-योग्यानाम् ॥ १ ॥ तान्येव लिंगानि स्वरूपतो ग्रन्थकारः पठति—

**औदार्यं दाक्षिण्यं पापजुगुप्साऽथ निर्मलो बोधः । लिंगानि धर्मसिद्धेः प्रायेण जनप्रियत्वं च ॥ २ ॥**

उदारस्य भावः औदार्य-वक्ष्यमाणलक्षणं दक्षिणः-अनुकूलस्तद्भावो दाक्षिण्यं-निर्देक्ष्यमाणस्वरूपं पापजुगुप्सा-पापपरिहारः अथ निर्मलो बोधः-अभिधास्यमानस्वरूपः लिंगानि-चिह्नानि धर्मसिद्धेः-धर्मनिष्पत्तेः प्रायेण-बाहुल्येन जनप्रियत्वं च-लोकप्रियत्वं च ॥ २ ॥ सांप्रतमौदार्यलक्षणमाह—

**औदार्यं कार्पण्यत्यागाद्विज्ञेयमाशयमहत्त्वम् । गुरुदीनादिष्वौचित्यवृत्ति कार्ये तदत्यन्तम् ॥ ३ ॥**

औदार्यं नाम धर्म्मतत्त्वलिङ्गं कार्पण्यत्यागात्–कृपणभावपरित्यागादतुच्छवृत्त्या 'विज्ञेयमाशयमहत्त्वं' आशयस्य–अध्यवसायस्य महत्त्वं–विपुलत्वं, तदेव विशिष्यते–'गुरुदीनादिष्वौचित्यवृत्ति' गुरुषु–गौरवार्हेषु, तदधिकारे यथोक्तं–" माता पिता कलाचार्य, एतेषां ज्ञातयस्तथा । वृद्धा धर्म्मोपदेष्टारो, गुरुवर्गः सतां मतः ॥ १ ॥" दीनादिषु च-अनाथादिषु यदौचित्यवृत्ति, औचित्येन वृत्तिः अतिशयौदार्यं आशयमहत्त्वे वा तदौचित्यवृत्ति कार्ये-कार्यविषये तद्–औदार्यमाशयमहत्त्वं वा अत्यन्तं-अतिशयेन, [illegible] वा एतद् गुर्व्यादिषु ॥ ३ ॥ इदानीं दाक्षिण्यलक्षणमाह—

**दाक्षिण्यं परकृत्येष्वपि योगपरः शुभाशयो ज्ञेयः । गांभीर्यधैर्यसचिवो मात्सर्यविघातकृत् परमः ॥ ४ ॥**

दाक्षिण्यं–पूर्वोक्तस्वरूपं परकृत्येष्वपि–परकार्येष्वपि योगपरः–उत्साहपरः शुभाशयः–शुभाध्यवसायो ज्ञेयः गांभीर्य-धैर्यसचिवः-परैरलब्धमध्यो गंभीरस्तद्भावो गांभीर्यं धैर्य-धीरता स्थिरत्वं ते गांभीर्यधैर्ये सचिवौ-सहायावस्येति, मात्सर्यविघातकृत्–[illegible]ऽसहिष्णुत्वविघातकृत् परमः–प्रधानः शुभाशय इति ॥ ४ ॥ पापजुगुप्सालक्षणमाह—

**पापजुगुप्सा तु तथा सम्यक्परिशुद्धचेतसा सततम् । पापोद्वेगोऽकरणं तदचिन्ता चेत्यनुक्रमतः ॥ ५ ॥**

पापजुगुप्सा तु तथा पापपरिहाररूपा सम्यक्परिशुद्धचेतसा–अविपरीतपरिशुद्धमनसा सततं–अनवरतं पापोद्वेगः–अतीतकालपापोद्विग्नता अकरणं–पापस्य वर्त्तमानकाले तदचिन्ता चेत्यनुक्रमतः–तस्मिन् भाविनि पापे अचिन्ता-अचिंतनमनुक्रमेण

---

१ तथा तेन प्रकारेण [illegible]

आनुपूर्व्या कालत्रयरूपया, अथवा पापोद्वेगः पापपरिहारः कायप्रवृत्त्या अकरणं वाचा तदचिन्ता—पापाचिन्ता मनसा, सर्वोऽपीयं पापजुगुप्सा धर्म्मतत्त्वस्य लिङ्गम् ॥ ५ ॥ अधुना निर्म्मलबोधलक्षणमाह—

**निर्मलबोधोऽप्येवं शुश्रूषाभावसंभवो ज्ञेयः । शमगर्भशास्त्रयोगात् श्रुतचिन्ताभावनासारः ॥ ६ ॥**

निर्म्मलबोधोऽपि—विमलबोधोऽपि एवं—अनेन प्रकारेण शुश्रूषाभावसंभवः—शुश्रूषायां यो भावः तत्समुत्थो ज्ञेयो—ज्ञातव्यः शमगर्भशास्त्रयोगात—प्रशमगर्भं यच्छास्त्रं तद्योगात्—तत्संबन्धात् श्रुतचिन्ताभावनासारः—श्रुतसारश्चिन्तासारो भावनासार-स्त्रिविधो निर्म्मलबोधो विज्ञेयः, श्रुतचिन्ताभावनाज्ञानानां प्रतिविशेषं वक्ष्यति ॥ ६ ॥ सफलं जनप्रियत्वं प्रतिपादयति—

**युक्तं जनप्रियत्वं शुद्धं तद्धर्मसिद्धिफलदमलम् । धर्मप्रशंसनादेर्बीजाधानादिभावेन ॥ ७ ॥**

युक्तं—उचितं, नायुक्तं, जनप्रियत्वं धर्म्मतत्त्वलिङ्गं, यतः शुद्धं—रागादिदोषरहितं स्वपरयोः तत् जनप्रियत्वं धर्म्मसिद्धिफलदं-धर्म्मनिष्पत्तिफलप्रदं अलम्—अत्यर्थं धर्म्मप्रशंसनादेः—धर्म्मप्रशंसनधर्म्मप्रवृत्त्यादेः सकाशाद् बीजाधानादिभावेन-बीजं—पुण्यानुबन्धि-पुण्यं तस्याधानं—न्यासो वपनं, आदिशब्दादङ्कुरपत्रपुष्पफलकल्पविशेषपरिग्रहः, तेषां भावेन—उत्पादेन धर्मसिद्धिफलदं वर्त्तते, जनो हि ध-र्म्मप्रशंसनादौ वर्त्तमानो बीजाधानादिभावेन धर्म्मसिद्धिफलमासादयति, स च धर्म्मप्रशंसनादि यस्य जनप्रियत्वयुक्तस्य गुणेन करोति तस्य तज्जनप्रियत्वं शुद्धं सद्धर्म्मसिद्धिफलवद्भवति, निमित्तभावोपगमेनेति ॥ ७ ॥ एवं धर्म्मतत्त्वलिंगान्यौदार्यादीनि विधिमुखेन

१ धर्मप्रशंसनादेः सकाशात् आदिना करणेच्छानुबन्धतदुपायान्वेषणातत्प्रवृत्तिगुरुसंयोगसम्यक्त्वलाभग्रहणं २ एवं प्राथमिकगुणरूपाणि धर्मतत्त्वस्य लिंगान्यभिधाय दोषाभावरूपाणि तानि वक्तुमुपक्रमते

प्रतिपाद्य धर्म्मतत्त्वव्यवस्थितानां पुंसां व्यतिरेकमुखेन विषयतृष्णादीनां स्वरूपं प्रतिपिपादयिषुर्दृष्टान्तपूर्वकं विकाराभावमाविर्भावयितुमाह—

**आरोग्ये सति यद्वद् व्याधिविकारा भवन्ति नो पुंसाम् । तद्वद्धर्मारोग्ये पापविकारा अपि ज्ञेयाः ॥ ८॥**

आरोग्ये-रोगाभावे सति जायमाने यद्वदिति यथा व्याधिविकारा-रोगविकारा भवन्ति नो पुंसां-आरोग्यवतां तद्वदिति तथा धर्म्मारोग्ये-धर्म्मरूपमारोग्यं तस्मिन् सति पापविकारा अपि वक्ष्यमाणा न भवन्तीति विज्ञेयाः ॥ ८ ॥ पापविकारा ये न भवन्ति तान् विशेषतो निर्दिशति—

**तत्रास्य विषयतृष्णा प्रभवत्युच्चैर्न दृष्टिसम्मोहः । अरुचिर्न धर्मपथ्ये न च पापा क्रोधकण्डूतिः ॥ ९ ॥**

तदेवं स्थिते धर्म्मतत्त्वयुक्तस्य न अस्य-पुरुषस्य विषयतृष्णा-वक्ष्यमाणलक्षणा प्रभवति-जायते, उच्चैः-अत्यर्थं न दृष्टिसंमोहो-वक्ष्यमाणलक्षण एव, अरुचिः-अभिलाषाभावो न धर्म्मपथ्ये-न धर्म्मपथ्यविषये, न च पापा स्वरूपेण पापहेतुर्वा क्रोधकण्डूतिः-क्रोध एव कण्डूतिः, कण्डूशब्दः कण्ड्वादिषु पठ्यते, तस्य क्तिन्नन्तस्य रूपमेतत् ॥९॥ इदानीं विषयतृष्णाया लक्षणमाह—

**गम्यागम्यविभागं त्यक्त्वा सर्वत्र वर्त्तते जन्तुः । विषयेष्ववितृप्तात्मा यतो भृशं विषयतृष्णेयम् ॥१०॥**

गम्यागम्ये लोकप्रतीते तयोर्विभागः-आसेवनपरिहाररूपस्तं त्यक्त्वा-विषयानियमेन व्यवस्थितः सर्वत्र वर्त्तते जन्तुः-सामान्येन सर्वत्र प्रवर्त्तते जन्तुः-प्राणी विषयेषु-शब्दस्पर्शरसरूपगन्धेषु अवितृप्तात्मा-साभिलाष एव यतो-यस्या विषयतृष्णायाः

प्रकाशाद् भृशं-अत्यर्थं विषयतृष्णेयमिति-इयं विषयतृष्णोच्यते ॥ १० ॥ इदानीं दृष्टिसंमोहस्य लक्षणमाह—

गुणतस्तुल्ये तत्त्वे संज्ञाभेदागमान्यथादृष्टिः । भवति यतोऽसावधमो दोषः खलु दृष्टिसंमोहः ॥ ११ ॥

गुणः-उपकारफलं तदाश्रित्य तुल्ये-समाने द्वयोर्वस्तुनोः तद्भावस्तत्त्वं तस्मिंस्तुल्ये सति 'संज्ञाभेदागमान्यथादृष्टिः' आगमे-आगमविषये अन्यथा-विपरीता दृष्टिः-मतिरस्येत्यागमान्यथादृष्टिः, बहुव्रीहिसमासः, संज्ञाभेदेन-नामभेदेनागमान्यथादृष्टिरिति पुरुषः परिगृह्यते, भवति-जायते, यतो-यस्माद्दोषादसौ दोषः अधमो-निकृष्टः, खलुशब्दोऽवधारणेऽधम एव, दोषो दृष्टिसंमोहाभिधानः, इदमत्र हृदयं-निदर्शनमात्रेण द्वयोरारंभयोर्भोगोपभोगलक्षणं फलमाश्रित्य तुल्यमेव तत्त्वं, तत्रैकस्मिन्नारंभे प्रवृत्तः पुरुषस्तत्फलोपयोगी तमारंभं सानर्थं मन्यते, अपरस्तु तत्समान एव प्रवृत्तस्तमारंभं निर्दोषं मन्यते तत्फलं च स्वयमेवोपभुङ्क्ते यतो दोषात् स दृष्टिसंमोहो इति, अथवा गुणः-परिणामो भावोऽध्यवसायविशेषस्तदङ्गीकरणेन तुल्ये तत्त्वे संज्ञाभेदागमान्यथादृष्टिः पुरुषो यतो दोषात् प्रवर्त्तते न दृष्टिसंमोहो नाम दोषो भवति, यत्र तु गुणतो-भावाख्याद् गुणात्र तुल्यं तत्त्वं-स्वरूपं द्वयोरारंभात्मनोर्व्यक्तिभेदेन वस्तुनोः, तत्र चैत्यायतनादिविषये क्षेत्रहिरण्यग्रामादौ शास्त्रीयाध्यवसायभेदेन प्रवृत्तत्वात् स्वयं च तत्फलस्यानुपभोगात्, केवलमागमानुसारितया तत्रोपेक्षापरित्यागेन ग्रामक्षेत्राद्यारंभमपरिहरतोऽपि न दृष्टिसंमोहाख्यो दोषः, तत्त्वतस्तस्यारंभपरिवर्जनात्, दर्शनं-आगमो जिनमतं तत्र संमोहः-संमूढता अन्यथोक्तस्यान्यथाप्रतिपत्तिर्दर्शनसंमोहः, नचैवंविधस्यागमिकस्य दोषः संभवतीति, तथा चागमः-"चोएइ

१ नन्वेतेऽरस्तु प्रवृत्तिनाशा निरवद्य, तत्रापरस्य दृष्टिसंमोहः २ यथा यादृच्छिकया यागीयायां च हिंसायां स्वोपभोगमात्रफलभूतिकामनालक्षणक्लिष्ट-
[illegible] वैदिकानां दृष्टिसंमोहः ३ स्वपरयोर्भावापद्विनिवारणाध्यवसायप्रवृद्ध्या न

चेइयाणं खेत्तहिरण्णाई गामगावाई। लग्गंतस्स उ जइणो तिकरणसोही कहं णु भवे? ॥ १ ॥ अयं च सचोद्यपरिहारोऽवसेयो। यदिना-अहिंसाप्रशमादीनां तंत्रान्तरेष्वपि तुल्ये तत्त्वे परिभाषाभेदमात्रेणागमेष्वन्यथादृष्टिः पुरुषो यतो भवति स दृष्टिसंमोह इति ॥ ११ ॥ एवं दृष्टिसंमोहमभिधाय तदनन्तरं धर्म्मपथ्यविषयायाः अरुचेर्लिङ्गमाह—

**धर्मश्रवणेऽवज्ञा तत्त्वरसास्वादविमुखता चैव। धार्मिकसत्त्वासक्तिश्च धर्मपथ्येऽरुचेर्लिङ्गम् ॥ १२ ॥**

धर्म्मस्य श्रवणम्-अविपरीतार्थमाकर्णनं तत्र अवज्ञा अनादरः तत्त्वे-परमार्थे रसः-आसक्तिहेतुः तस्य-आस्वादः तस्मिन् विमुखता-वैमुख्यं तत्त्वरसास्वादविमुखता चैव, धार्मिका ये सत्त्वास्तैरसक्तिः-असंयोगः असंपर्को धार्मिकसत्त्वाऽसक्तिश्च, 'धर्मपथ्ये' धर्मः पथ्यमिव तस्मिन् अरुचेर्लिङ्गमिति प्रत्येकमभिसंबंधः करणीयः ॥१२॥ 'न च पापा क्रोधकण्डूति'रित्युक्तं, तस्याश्चिह्नमाह—

**सत्येतरदोषश्रुतिभावादन्तर्बहिश्च यत् स्फुरणम्। अविचार्य कार्यतत्त्वं तच्चिह्नं क्रोधकण्डूतेः ॥ १३ ॥**

सत्यदोषश्रुतिभावादसत्यदोषश्रुतिभावाच्चान्तर्बहिश्च-अभ्यन्तरपरिणाममाश्रित्यान्तः बहिर्गताऽप्रसन्नताद्याकारद्वारेण बहिश्च यत्स्फुरणं-व्याप्रुद्धिश्चलनं वा अविचार्य-अनालोच्य कार्यतत्त्वं-कार्यपरमार्थं तत् चिह्नं-लक्षणं क्रोधकण्डूतेः-क्रोधकण्ड्वाः ॥१३॥ एवमेते विषयतृष्णादयो व्यतिरेकमुखेनोक्ताः, तदभावमुपदर्शयन् मैत्र्यादिगुणसंभवमाह—

---

१ संज्ञाभेदेनाचरणनियममहाव्रतादिष्वपरिभाषाभेदेनागमेषु पातंजलजैनादिशास्त्रेष्वन्यथादृष्टिः पुरुषो यतो भवति स दृष्टिसंमोहः, महाव्रतादिप्रतिपादको मदीयागमः समीचीनः आचरणनियमादिप्रतिपादकोऽन्यागमो न समीचीन इति, अस्य चामद्दूषणात्, सर्वस्यापि सद्वचनस्य परसमयेऽपि स्वसमयान्तर्भूतत्वात्, उक्तं चोपदेशपदे—"सव्वप्पवायमूलं दुवालसंगं जओ जिणक्खायं। रयणागरतुल्लं खलु तो सव्वं सुन्दरं तम्मि ॥ १ ॥ इत्यन्यत्र विस्तरः ॥ ११ ॥

**एते पापविकारा न प्रभवंत्यस्य धीमतः सततम् । धर्मामृतप्रभावाद् भवंति मैत्र्यादयश्च गुणाः ॥ १४ ॥**

एते पापविकाराः–पूर्वोक्ता न प्रभवंति–न जायंते अस्य–पुरुषस्य धीमतो- बुद्धिमतः सततं–अनवरतं, धर्मामृतप्रभावात्- धर्म एवामृतं तत्प्रभावाद्, भवंति-संपद्यते मैत्र्यादयश्च गुणा–वक्ष्यमाणस्वरूपाः ॥१४॥ मैत्र्यादीनामेव लक्षणमाह—

**परहिताचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥१५॥**

परेषां प्राणिनां हितचिन्ता–हितचिंतनं मैत्री, ज्ञेयेति सर्वत्र वाक्यशेषः, परेषां दुःखं तद्विनाशिनी तथा करुणा–कृपा, परेषां सुखं तेन तस्मिन् वा तुष्टिः–परितोषोऽप्रीतिपरिहारो मुदिता, परेषां दोषा–अविनयादयः प्रतिकर्तुमशक्यास्तेषामुपेक्षणं- अवधीरणमुपेक्षा, संभवत्प्रतीकारेषु दोषेषु नोपेक्षा विधेया ॥ १५ ॥ एवं मैत्र्यादिगुणान् भावनारूपानभिधाय धर्मतत्त्वलक्षणोप- संहारं चिकीर्षुराह—

**एतज्जिनप्रणीतं लिङ्गं खलु धर्मसिद्धिमज्जन्तोः । पुण्यादिसिदिसिद्धेः सिद्धं सद्धेतुभावेन ॥ १६ ॥ ४ ॥**

एतत्–पूर्वोक्तं सर्वमेवौदार्यादिविधिप्रतिषेधविषयं जिनप्रणीतं–जिनोक्तं लिङ्गं–लक्षणं, खलुशब्दो वाक्यालङ्कारे, धर्मसिद्धिमत्– धर्मनिष्पत्तिमत् जन्तोः–प्राणिनः पुण्यादिसिद्धिसिद्धेः–पुण्याद्युपायनिष्पत्तेः सिद्धं–प्रतिष्ठितं सद्धेतुभावेन–सत्कारणत्वेनावन्ध्य- हेतुत्वेनेतियावत्, पुण्योपायाश्च चत्वारो, यथोक्तं–"दया भूतेषु वैराग्यं, विधिदानं यथोचितम् । विशुद्धा शीलवृत्तिश्च, पुण्योपायाः

[1] तथा चैतानि दोषाभावरूपाणि धर्मतत्त्वलिङ्गान्युक्तानि ।

प्रकीर्तिताः ॥१॥" आदिग्रहणात् ज्ञानयोगोपायपरिनिष्पत्तेश्च सद्धेतुत्वेन सिद्धमेतल्लिङ्गमिति[1] ॥१६॥४॥ इति चतुर्थं षोडशकम् ॥



## अथ पंचमं षोडशकम्

एवं तावत् सामान्येन व्यवस्थितस्य धर्मतत्त्वस्य लिङ्गं सप्रपञ्चमभिधायाधुना लोकोत्तरतत्त्वसंप्राप्तिमाह—

एवं सिद्धे धर्मे सामान्येनेह लिङ्गसंयुक्ते । नियमेन भवति पुंसां लोकोत्तरतत्त्वसंप्राप्तिः ॥ १ ॥

एवं सिद्धे धर्मे–पूर्वोक्तनीत्या सामान्येन–लोकलोकोत्तराप्रविभागेन इह–प्रक्रमे लिङ्गसंयुक्ते प्रतिपादितनीत्या नियमेन–नियोगेन भवति–जायते पुंसां–पुरुषाणां लोकोत्तरस्य–लोकोत्तमस्य तत्त्वस्य परमार्थस्य-संप्राप्तिः-लाभ इति ॥१॥ इयं च लोकोत्तरतत्त्वसंप्राप्तिर्यद्रूपा यस्मिंश्च काले संभवति तदेतदभिधातुमाह—

आद्यं भावारोग्यं बीजं चैषा परस्य तस्यैव । अधिकारिणो नियोगाच्चरम इयं पुद्गलावर्ते ॥ २ ॥

आद्यं भवमानं भावारोग्यं–भावरूपमारोग्यं, तदिह सम्यक्त्वं, तद्रूपत्वाल्लोकोत्तरतत्त्वसंप्राप्तेः, बीजं चैषा–लोकोत्तरतत्त्वसंप्राप्तिः परस्य–प्रधानस्य तस्यैव–भावारोग्यस्य मोक्षलक्षस्य, रागद्वेषमोहानां तन्निमित्तानां च जातिजरामरणादीनां भावरोगरूपत्वात्तदभा-

१ निरूपः पापेभ्यः ... सिद्धः निरूपः सद्धेतुभावेन–भवभ्यहेतुत्वेन सिद्ध पुण्यादीति, आदिना ज्ञानयोगग्रहः, अभिमतसिद्धिरुपायोपायार्थं इत्यन्ये,
२ पुंसां ... इत्यपेक्षया ... लोको-त्तरं–... परमार्थस्य संप्राप्ति

वरूपत्वाच्च नि.श्रेयसस्य, अधिकारिणः-क्षीणप्रायसंसारस्य नियोगात्-नियमेन चरमे-पर्यन्तभववर्तिनि इयं-प्रस्तुता पुद्गलावर्ते-पुद्गलपरावर्ते समयप्रसिद्धे औदारिकवैक्रियतैजसकार्म्मणप्राणापानभाषामनोभिरेतत्परिणामपरिणतसर्व्वपुद्गलग्रहणरूपे' ॥ २ ॥ कुतः पुनर्हेतोश्चरमपुद्गलावर्तो भवतीत्याशंकायामिदमाह—

स भवति कालादेव प्राधान्येन सुकृतादिभावेऽपि। ज्वरशमनौषधसमयवदिति समयविदो विदुर्निपुणम् ३

सः-चरमपुद्गलावर्तो भवति-स्वरूपतः कालादेव प्राधान्येन, हेतुविवक्षाया कालप्राधान्यमाश्रित्य शेषकर्म्मादिहेत्वन्तरोपसर्ज्जनीभावप्रतिपादनेन, सुकृतादिभावेऽपि-सुकृतदुष्कृतकर्म्मपुरुषकारनियत्यादिभावेऽपि, कर्म्मादिभावेऽपीति पाठान्तरं नाश्रितं, छन्दोभङ्गभयात्, निदर्शनमाह-ज्वरशमनौषधसमयवत्-ज्वरं शमयतीति ज्वरशमनं तच्च तदौषधं च तस्य समयः-प्रस्तावो देशकालस्तद्वद्भवति चरमः, ज्वरशमनीयमप्यौषधं प्रथमापाते दीयमानं न कंचन गुणं पुष्णाति, प्रत्युत दोषानुदीरयति, तदेव चावसरे जीर्णज्वरादौ निर्तीर्यमाणं स्वकार्यं निर्वर्त्तयति, एवमयमप्यवसरकल्पो वर्तते चरम इति भावः, इत्येवं समयविदः-सिद्धान्तज्ञा विदुः-जानन्ति, क्रियाविशेषणं निपुणमिति ॥३॥ कस्मात्पुनः चरमपुद्गलावर्त्तः प्राधान्येन लोकोत्तरतत्त्वसंप्राप्तेर्हेतुराश्रीयत इत्याह—

नागमवचनं तदधः सम्यक् परिणमति नियम एषोऽत्र। शमनीयमिवाभिनवे ज्वरोदयेऽकाल इतिकृत्वा॥४।

१ अभ्युच्चयपक्षोऽयं यावता सार्वतत्रिक्यप्यपुनर्बन्धकक्रियाऽन्यपुद्गलपरावर्त्ते न भवति "मोक्खासओऽवि नऽन्नत्थ होई'त्यादिना मोक्षाशयस्यापि तत्र प्रतिषेधादित्य यत्र विस्तरो द्रष्टव्य

नेति प्रतिषेधे, आगमवचनं-आर्षवचनं तदृधः-तस्याधस्तात् पुद्गलपरावर्तादभ्यधिकसंसारस्य सम्यग्-विषयविभागेन परिणमति, न परिणमत्येवेत्यर्थः, नियम एषः-प्रस्तुतोऽत्र प्रक्रमे शमनीयमिव-औषधमिव अभिनवे ज्वरोदये-प्रत्यग्रे ज्वरप्रादुर्भावे, किमिति?, अकाल इतिकृत्वा-अप्रस्ताव इतिकृत्वा ॥ ४ ॥ 'नागमवचनं तस्याधस्तात्परिणमती'त्युक्तं, तदेव दर्शयति[2]—

**आगमदीपेऽध्यारोपमण्डलं तत्त्वतोऽसदेव तथा । पश्यन्त्यपवादात्मकमविषय इह मन्दधीनयनाः ॥५॥**

आगमदीपे अध्यारोपमण्डलं-भ्रान्तिमण्डलं अध्यारोपो-भ्रांतिस्तया मण्डलं-मण्डलाकारं, दीपे अपरे तु भ्रान्तिसमूहं, तत्त्वतः-परमार्थेन वस्तुवृत्त्या असदेव-अविद्यमानमेव तथा-तेन रूपेण तैमिरिकदृश्येन, प्रदीपस्योपवर्तितया पश्यन्ति दृष्टिदोषात्, अपवादात्मकं-अपवादस्वरूपं-अविषये-योऽपवादस्य कथंचिन्न विषयस्तस्मिन्नविद्यमानमेव पश्यति इह-लोके मन्दधीनयनाः-मन्दबुद्धिचक्षुषः, यथोक्तम्-"मयूरचंद्रकाकारं, नीललोहितभासुरम् । प्रपश्यन्ति प्रदीपादेर्मण्डलं मन्दचक्षुषः ॥१॥" ॥५॥ यत एवागमदीपेऽध्यारोपमण्डलं तत्त्वतोऽसदेव पश्यन्ति

**तत एवाविधिसेवा दानादौ तत्प्रसिद्धफल एव । तत्तत्त्वदृशामेषा पापा कथमन्यथा भवति ? ॥ ६ ॥**

तत एव-अध्यारोपादेव भ्रान्तेरेवेत्यर्थः अध्यारोपमण्डलदर्शनादेव वा 'अविधिसेवा' अविधेः-विधिविपर्ययस्य सेवा-सेवनं दानादौ विषये, आदिशब्दाच्छीलतपोभावनापरिग्रहः, तत्प्रसिद्धफल एव-तस्मिन्नागमे प्रसिद्धं फलं यस्य दानादेस्तस्मिन्, तस्यागमस्य

---

१ न केवलं तदृधस्तादागमवचनं न परिणमति, किन्तु विपरीतं परिणमतीत्याह २ उत्तमेवार्थं कार्यलिङ्गेन समर्थयति

तत्त्वं-परमार्थस्तं पश्यन्तीति तत्त्वदर्शस्तेषां एषा-अविधिसेवा पापा स्वरूपेण कथमन्यथा भवति ?, न भवतीत्यर्थः ॥ ६ ॥

अविधिसेवागतमेवाह—

येषामेषा तेषामागमवचनं न परिणतं सम्यक् । अमृतरसास्वादज्ञः को नाम विषे प्रवर्त्तेत ? ॥ ७ ॥ सम्यग्-ज्ञेयविषयविभागेन चेतसि न व्यवस्थितं,

येषां-जीवानां एषा-अविधिसेवा तेषामागमवचनं-सर्वज्ञवचनं न परिणतं सम्यग्-ज्ञेयविषयविभागेन चेतसि न व्यवस्थितं, आगमवचनापरिणतौ कारणमाह-अमृतरसास्वादज्ञः पुमान् को नाम ?, न कश्चिद्, विषे मारणात्मके प्रवर्त्तेत-भक्षयितुं प्रवृत्तिं विदधीत, विषप्रवृत्तिकल्पाऽविधिसेवा, ततो विज्ञायते नागमवचनं सम्यक्परिणतमिति ॥७॥ प्रतिषेधमुखेनोक्तमर्थं विधिमुखेनागमवचनपरिणामाश्रयमाह—

तस्माच्चरमे नियमादागमवचनमिह पुद्गलावर्त्ते । परिणमति तत्त्वतः खलु स चाधिकारी भवत्यस्याः ॥८॥

तस्माच्चरमे-अवमानवृत्तौ नियमात्-नियमेनागमवचनं पूर्वोक्तं इह पुद्गलावर्त्ते-प्रागुक्ते परिणमति-उत्तरोत्तरपरिणामविशेषमासादयति, स्वरूपेण परिस्फुरतीत्यर्थः, तत्त्वतः खलु-तत्त्वत एव, यस्यैतदागमवचनं परिणमति स चाधिकारी-अधिकारवान् भवत्यस्याः-लोकोत्तरतत्त्वसंप्राप्तेः, शेषस्त्वनधिकारीति ॥८॥ किमित्यागमवचनपरिणामः प्रशस्यत इत्याह—

आगमवचनपरिणतिर्भवरोगसदौषधं यदनपायम् । तदिह परः सद्बोधः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥

१ उक्तमेवार्थं कार्यलिङ्गेन समर्थयति २ ज्ञानफलाभावलक्षणापरिणामस्याप्यविधिसेवा लिङ्गमित्याह ३ आगमवचनपरिणतिर्भवरोगसदौषधं भवति यस्मात् । निरपाय तदिह परः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥ इति पाठान्तरम् ॥

आगमवचनपरिणतिः–यथावत्तत्प्रकाशरूपा 'भवरोगसदौषधं' भवरोगस्य–संसारामयस्य सदौषधं तदुच्छेदकारित्वेन यद्-यस्मात् अन(निर)पायं–अपायरहितं निर्दोषं[1] वर्त्तते, तदिह परः सद्बोधः, तद्–भवरोगसदौषधमागमवचनपरिणत्याख्यं परः–प्रधानः सद्बोधः–सम्यग्ज्ञानं वर्त्तते, सदनुष्ठानस्य–सुन्दरानुष्ठानस्य हेतुः–कारणमितिकृत्वा ॥ ९ ॥ कथं पुनः सद्बोधादनुष्ठानं परिपूर्णं भवतीत्याह—

दशसंज्ञाविष्कंभणयोगे सत्यविकलं सदो भवति । परहितनिरतस्य सदा गंभीरोदारभावस्य ॥ १० ॥

दश च ताः संज्ञाश्च २ तासां विष्कंभणं–यथाशक्ति निरोधः, तद्योगे–तत्संबन्धे सति तन्निरोधोत्साहे वा अविकलं–ह्यखण्डं भद्रः–एतत्सदनुष्ठानं भवति परहितनिरतस्य–परोपकाराभिरतस्य सदा–सर्व्वकालं गंभीरोदारभावस्य–गांभीर्य्यौदार्ययुक्तमनसः ॥ १० ॥ कथं पुनरिदं दशसंज्ञाविष्कंभणादि दुर्लभमपि भवतीत्याह—

सर्वज्ञवचनमागमवचनं यत् परिणते ततस्तस्मिन् । नासुलभमिदं सर्वं ह्युभयमलपरिक्षयात् पुंसाम् ॥ ११ ॥

सर्वज्ञवचनमागमवचनं यद्–यस्मात् परिणते ततस्तस्मिन्–आगमवचने नासुलभमिदं–न दुर्लभमिदं, किंतु सुलभमेव भवति, सर्वं हि पूर्वोक्तं उभयमलपरिक्षयात्–क्रियामलभावमलपरिक्षयात् पुंसां–पुरुषाणाम् ॥ ११ ॥ 'अध्यारोपादविधिसेवा दाना-द्यं'[2] त्युक्तं तद्विपर्ययेणाह—

[1] आगमवचनस्य परिणतिः ज्ञानावरणह्रासोत्थोपादेयत्वादिविषयबालादिज्ञानतुल्यविषयप्रतिभासोत्तीर्णज्ञानावरणह्रासोत्थोपादेयत्वादिविषयतत्त्वावगमपरिणा-मरूपाऽरूपा २ निर्दोषं प्रतिबन्धेऽपि ध्यादिभावात् ३ प्रकृष्टः सम्यग्ज्ञानावरणह्रासोत्थसम्यग्बोधोपादेयत्वादिविषयत्वाच्च सद्बोधप्रकर्षतेदृग्ज्ञानप्रकाशः,

विधिसेवा दानादौ सूत्रानुगता तु सा नियोगेन । गुरुपारतन्त्र्ययोगादौचित्याच्चैव सर्व्वत्र ॥ १२ ॥

विधिसेवा-आगमाभिमतन्यायसेवा दानादौ-विषये ज्ञेया, सूत्रानुगता तु-आगमानुगता तु सा-विधिसेवा नियोगेन-नियमेन, गुरुपारतन्त्र्ययोगात्—गुरुपरतन्त्रसंबन्धात्, औचित्याच्चैव-अनौचित्यपरिहारेण सर्व्वत्र—दीनादानविशेषेण ॥ १२ ॥ 'विधिसेवा दानादौ' इत्युक्तं, तत्र महादानदानयोर्विशेषाभिधित्सयेदमाह—

न्यायात्तं स्वल्पमपि हि भृत्यानुपरोधतो महादानम् । दीनतपस्व्यादौ गुर्वनुज्ञया दानमन्यत्तु ॥ १३ ॥

न्यायात्तं-ब्राह्मणक्षत्रियविट्शूद्राणां स्वजातिविहितन्यायोपात्तं स्वल्पमपि हि-स्तोकमपि हि भृत्यानुपरोधतो-भृत्यानुपरोधेन पोष्यवर्गानिपातेन महादानं-विशिष्टदानं दीनतपस्व्यादौ विषये गुर्वनुज्ञया-पित्रादिकुलपुरुषानुज्ञया, यदेवंविशेषणं तन्महादानं, दानमन्यत्तु—न्यायानुपात्तभृत्योपरोधादिना विपर्ययेण दीयमानमन्यत्पुनर्दानमेव भवति ॥ १३ ॥ एवं महादानं दानं चाभिधाय देवार्चनमाह—

देवगुणपरिज्ञानात्तद्भावानुगतमुत्तमं विधिना । स्यादादरादियुक्तं यत्तद्देवार्चनं चेष्टम् ॥ १४ ॥

'देवगुणपरिज्ञानात्' देवगुणानां-वीतरागत्वादीनां परिज्ञानं-अवबोधस्तस्मात्, 'तद्भावानुगतमुत्तमं विधिना' तेषु गुणेषु भावो-बहुमानस्तेनानुगतं-युक्तं उत्तमं-प्रधानं विधिना-शास्त्रोक्तेन, स्यादादरादियुक्तं यत्-आदरणकरणप्रीत्यादिसमन्वितं यत् स्यात् तद्देवार्चनं चेष्टं-तच्च देवार्चनमिष्टम् ॥ १४ ॥ प्रस्तुत एव संबन्धाः

एवं गुरुसेवादि च काले सद्योगविघ्नवर्जनया । इत्यादिकृत्यकरणं लोकोत्तरतत्त्वसंप्राप्तिः ॥ १५ ॥

'एवं गुरुसेवादि च' एवं विधिनैव गुरूणां-धर्म्माचार्यप्रभृतीनां सेवा, आदिशब्दात्पूजनादिग्रहः, काले-अवसरे, 'सद्योगविघ्नवर्ज्जनया' संतश्च ते योगाश्च सद्योगा-धर्म्मव्यापाराः स्वाध्यायध्यानादयस्तेषु विघ्नः-उपरोधो विघातस्तस्य वर्ज्जनया गुरुसेवादि विधेयं, इत्यादिकृत्यकरणं-एवमादीनां कृत्यानां-कार्याणामागमोक्तानां करणं-विधानं, लोकोत्तरतत्त्वसंप्राप्तिरुच्यते इति ॥ १५ ॥

इयं च कथं संपद्यत इत्याह—

इतरेतरसापेक्षा त्वेषा पुनराप्तवचनपरिणत्या । भवति यथोदितनीत्या पुंसां पुण्यानुभावेन ॥ १६ ॥ ५ ॥

इतरेतरसापेक्षा तु-इतरेतरसापेक्षैव परस्पराविरोधिनी 'एषा पुनराप्तवचनपरिणत्या' एषा पुनर्लोकोत्तरतत्त्वसंप्राप्तिराप्तस्य यद्वचनं तत्परिणत्या आगमपरिणत्या भवति यथोदितनीत्या-जायते यथोक्तन्यायेन पुंसां पुण्यानुभावेन-पुरुषाणां पुण्यविपाकेन ॥ १६ ॥ ५ ॥ इति पञ्चमं षोडशकम् ॥



## ॥ अथ षष्ठं षोडशकम् ॥

इदानीं लोकोत्तरतत्त्वसंप्राप्तौ यद्भवति तदाह—

---

१कार्यान्तराविरोधिनः सत्कार्यस्यापि लौकिकत्वादिति भावः

अस्यां सत्यां नियमाद् विधिवज्जिनभवनकारणविधानम्। सिध्यति परमफलमलं ह्यधिकार्यारंभकत्वेन ॥१॥

अस्यां सत्यां नियमात्-लोकोत्तरतत्त्वसंप्राप्तौ विधिवद्-विधिना जिनभवनकारणविधानं-जिनभवनं कारयत्यन्यैः तस्य जिनभवनकारणस्य विधानं-संपादनं सिद्ध्यति परमफलं-प्रकृष्टफलं ह्यलं-अत्यर्थं अधिकार्यारंभकत्वेन-अधिकारिण आरभकत्वं तेन ॥ १ ॥ कः पुनरस्याधिकारीत्याह—

न्यायार्जितवित्तेशो मतिमान् स्फीताशयः सदाचारः। गुर्वादिमतो जिनभवनकारणस्याधिकारीति ॥२॥

न्यायार्जितवित्तेशो-न्यायोपार्जितद्रव्यस्वामी मतिमान्-प्रतिभासंपन्नः, स्फीताशयः-वृद्धिगतधर्माध्यवसायः, सदाचारः-शोभनाचारो गुर्वादिमतो-गुरूणां—पितृपितामहादीनां राजामात्यप्रभृतीनां च मतः-अभिमतो बहुमतो जिनभवनकारणस्य प्रस्तुतस्याधिकारीति शास्त्रनियुक्तत्वेन ॥ २ ॥ 'जिनभवनकारणविधान'मित्युक्तं तद्गतमिदमाह—

कारणविधानमेतच्छुद्धा भूमिर्दलं च दार्वादि। भृतकानतिसंधानं स्वाशयवृद्धिः समासेन ॥ ३ ॥

कारणे-निर्वर्तने प्रयोजकव्यापारे विधानमेतद्-विधिरेष वर्त्तते, प्रकार इत्यर्थः, शुद्धा भूमिर्वक्ष्यमाणा दलं च दार्वादि दारुप्रभृति भृतकानतिसंधानं भृतकानां—कर्मकराणामवञ्चनं स्वाशयवृद्धिः-शुभपरिणामवृद्धिः समासेन-संक्षेपेण ॥ ३ ॥ 'शुद्धा भूमि'रित्युक्तं सैवोच्यते—

**शुद्धा तु वास्तुविद्याविहिता सन्न्यायतश्च योपात्ता । न परोपतापहेतुश्च सा जिनेन्द्रैः समाख्याता ॥४॥**

शुद्धा तु-शुद्धा पुनः भूमिः वास्तुविद्याविहिता-वास्तुविषया विद्या २ तया विहिता—समर्थिताऽनिराकृता, सन्न्यायतश्च योपात्ता-सन्न्यायेन च या गृहीता, न पराभिभवेन, न परोपतापहेतुश्च-न प्रातिवेश्मिकोपतापहेतुश्च सा मुनीन्द्रैः समाख्याता शुद्धा भूमिरिति ॥ ४ ॥ किमित्येवमुपदिश्यत इत्याह—

**शास्त्रबहुमानतः खलु सच्चेष्टातश्च धर्मनिष्पत्तिः । परपीडात्यागेन च विपर्ययात् पापसिद्धिरिव ॥ ५ ॥**

शास्त्रबहुमानतः खलु-वास्तुविद्याशास्त्रबहुमानेन सच्चेष्टातश्च-पराभिभवपरिवर्जनेन धर्म्मनिष्पत्तिः-धर्मसंसिद्धिः परपीडात्यागेन च-परोपतापविरहेण च, विपर्ययात्पापसिद्धिरिव-शास्त्राबहुमानासच्चेष्टापरपीडालक्षणाद्विपर्ययात् पापसिद्धिरिव-पापनिष्पत्तिरिव कारणत्रयाद्धर्म्मनिष्पत्तिर्भवतीति ॥ ५ ॥ न केवलमेवम्, इत्थं च धर्म्मनिष्पत्तिरित्याह—

**तत्रासन्नोऽपि जनोऽसंबन्ध्यपि दानमानसत्कारैः । कुशलाशयवान् कार्यो नियमाद्बोध्यंगमयमस्य ॥६॥**

तत्रासन्नोऽपि जनो-यत्तद्देशवर्ती असंबन्ध्यपि-स्वजनादिसंबन्धरहितोऽपि दानमानसत्कारैः-दानमन्नपानवस्त्रादेः मानो-मान्यत्वं सत्कारः-सत्क्रिया आसनप्रदानादिरूपा तैः, कुशलाशयवान् कार्यो, जन इति वर्त्तते, नियमात्-नियमेन बोधेरंगं-कारणं अयं-कुशलाशयोऽस्य जनस्य, बोधिलाभहेतुः कुशलाशयो भवति जनस्येतियावत् ॥ ६ ॥ 'दलं च दार्वादी'त्युक्तं तदाह—

---

१ कुशलाशयवान् धन्योऽयं जैनो धर्मो यत्रैतादृशमौचित्यमिति प्रशंसाभिव्यञ्जकशुभपरिणामयुक्त कार्य .

दलमिष्टकादि तदपि च शुद्धं तत्कारिवर्गतः[1] क्रीतम् । उचितक्रयेण यत्स्यादानीतं चैव विधिना तु ॥७॥

दलमिष्टकादि तदपि च शुद्धं, आदिग्रहणात्पाषाणादिग्रहः,- कीदृक् ?-शुद्धं तत्कारिवर्गतः क्रीतं उचितक्रयेण यत्स्यात्-तत्करणशीलास्तत्कारिणः-स्वयमेव मधृचा इष्टकादिषु तद्वर्गात् क्रीतमुचितमूल्येन यत्तच्छुद्धं, आनीतं चैव विधिना तु-लोकशास्त्र-दृष्टेन ॥ ७ ॥ दलविशेषगतमेवाह—

दार्वपि च शुद्धमिह यन्न नानीतं देवताद्युपवनादेः । प्रगुणं सारवदभिनवमुच्चैर्ग्रन्थ्यादिरहितं च ॥ ८ ॥

'दार्वपि च शुद्धमिह ज्ञेयमिति' गम्यते, यत् नानीतं देवताद्युपवनादेः-देवतादीनामुपवनं तत्समीपवर्ति, आदिग्रहणाद् देव-पुरुषग्रहो द्वितीयादिशब्दात्तिर्यग्मनुष्यसंबन्धिकाननग्रहः, दारुविशेषणमाह-प्रगुणम्-अवक्रं सारवत्-स्थिरं खदिरवत् अभिनवं च-प्रत्यग्रं, न जीर्णं, उच्चैः-अत्यर्थं, ग्रंथ्यादिरहितं च-ग्रंथ्यादिदोषविकलम् ॥ ८ ॥ 'विधिने'त्युक्तं तमेवाह—

सर्वत्र शकुनपूर्वं ग्रहणादावत्र वर्त्तितव्यमिति । पूर्णकलशादिरूपश्चित्तोत्साहानुगः शकुनः ॥ ९ ॥

सर्वत्र-इष्टकादौ शकुनपूर्वं-शकुनमूलं ग्रहणादावत्र वर्त्तितव्यमिति-ग्रहणानयनादौ प्रवर्तितव्यं, नान्यथा, कः पुनः शकुन इत्याह-पूर्णकलशादिरूपो-जलपरिपूर्णघटदूर्वाभारोद्धृतमृत्तिकादिरूपः, अयं च बाह्य इत्यान्तरपरिग्रहार्थं विशेषणमाह-चित्तो-

1 लोकशास्त्रदृष्टेन भारवाहकापरिपीडनादिलक्षणेनानीतं चैव 2 इदमुपलक्षणं गुरुवचनानुगतत्वस्यापि, अन्यत्रात्मप्रत्ययगुरुप्रत्ययशकुनप्रत्ययैस्त्रिधा शुद्धस्य कार्यस्य सिद्ध्युन्मुखत्वप्रतिपादनादिति द्रष्टव्यम्

त्साहानुगः शकुनः--मनःसमुत्साहमनुगच्छति ॥ ९ ॥ 'भृतकानतिसंधान'मित्युक्तं, ते कीदृशा इत्याह—

भृतका अपि कर्त्तव्या य इह विशिष्टाः स्वभावतःकेचित्। यूयमपि गोष्ठिका इह वचनेन सुखं तु ते स्थाप्याः१०

भृतका अपि–कर्मकरा अपि कर्त्तव्या--विधेयाः य इह विशिष्टा लोकव्यवहारेण स्वभावतः केचित् स्वभावेनैव, किमिति विशिष्टा आश्रीयन्त इत्याह--यूयमपि–भवन्तोऽपि गोष्ठिका इह–प्रस्तुतजिनभवने, अनेन वचनेन सुखं तु–सुखेनैव ते स्थाप्याः-स्थापनीयाः प्रस्तुतकार्ये विशिष्टत्वाद्भवन्ति ॥ १० ॥ अनतिसंधानमेवाह—

अतिसंधानं चैषां कर्त्तव्यं न खलु धर्ममित्राणाम्। न व्याजादिह धर्मो भवति तु शुद्धाशयादेव ॥११॥

अतिसंधानं च–वञ्चनं एषां–भृतकानां कर्त्तव्यं न खलु–नैव कर्त्तव्य धर्म्ममित्राणां–धर्म्मसुहृदां, किमिति ?, न व्याजादिह धर्म्मः, किं तु निर्व्याजप्रवृत्तेरेव, भवति तु शुद्धाशयादेव–निर्व्याजप्रवृत्तिगतात् ॥ ११ ॥ 'स्वाशयवृद्धि'रित्युक्तं, तत्र कः स्वाशय इत्याह—

देवोद्देशेनैतद् गृहिणां कर्तव्यमित्यलं शुद्धः। अनिदानः खलु भावः स्वाशय इति गीयते तज्ज्ञैः ॥१२॥

देवोद्देशेन–देवाभिसन्धिना एतत्–जिनभवनं गृहिणा कर्त्तव्यं–विधेयमित्यलं शुद्धो–दोषरहितः अनिदानः खलु भावो–निदानरहित एव भावः–अध्यवसायः स्वाशय इति गीयते तज्ज्ञैः–शुभाशय इत्युच्यते तद्वेदिभिः ॥ १२ ॥ अधुना वृद्धिमाह—

प्रतिदिवसमस्य वृद्धिः कृताकृतप्रत्युपेक्षणविधानात्। एवमिदं क्रियमाणं शस्तमिह निदर्शितं समये ॥१३॥

प्रतिदिवसं अस्य–कुशलाशयस्य वृद्धिः–अभ्युदयरूपा 'कृताकृतप्रत्युपेक्षणविधानात्' इदं कृतं–निर्वर्त्तितमिदमकृतं-करणीयमद्यापि भाविनि काले तयोः प्रत्युपेक्षणम्-अवलोकनं तद्विधानात्, यथोक्तं फलद्वारेण–"प्रशान्ताः सुगतिं यान्ति, संयताः स्वर्गगामिनः। शांतायतनकर्तॄणां, सदा पुण्यं प्रवर्द्धते॥ १॥ एवम्-उक्तेन न्यायेन इदं–जिनभवनं क्रियमाणं–विधीयमानं, शस्तं–प्रशस्तमिह अधिकारे निर्दर्शितं–नितरां दर्शितं अनुज्ञातं समये-सिद्धान्ते ॥ १३ ॥ किमिति शस्तं निदर्शितमित्याह—

एतदिह भावयज्ञः सद्गृहिणो जन्मफलमिदं परमम्। अभ्युदयाव्युच्छित्त्या नियमादपवर्गबीजमिति ॥१४॥

एतत्-जिनभवनमिह लोके भावयज्ञो–भावपूजा सद्गृहिणः–सद्गृहस्थस्य जन्मफलमिदं परमं–जन्मफलमिदं प्रधानं वर्त्तते 'अभ्युदयाव्युच्छित्त्या' अभ्युदयस्य–स्वर्गादेरव्यवच्छेदेन–सन्तत्या नियमादपवर्गबीजमिति–नियमेनापवर्गस्य–मोक्षस्य कारणमितिकृत्वा ॥ १४ ॥ एवं जिनभवनकारणमभिधाय तद्गतविशेषमाह—

देयं तु न साधुभ्यस्तिष्ठंति यथा च ते तथा कार्यम्। अक्षयनीव्या ह्येवं ज्ञेयमिदं वंशतरकाण्डम् ॥१५॥

देयं तु न साधुभ्यो–यतिभ्यो न देयमेव, यथा युष्मदीयमेतद् अत्र जीर्णोद्धारादि भवद्भिर्विधेयं, किं तु स्वयमेव तत् प्रतिजाग-

१ तथाहि "एतद्गृहार्हतं चैत्यमनेके सुगतिं गताः। यास्यन्ति बहवश्चान्ये, ध्याननिर्धूतकल्मषाः ॥ १ ॥ यात्रास्नात्रादिकर्मेह, भूतमन्यच्च भावि यत्। तत्सर्वं श्रेयसो बीजं, ममार्हच्चैत्यनिर्मितौ ॥२॥ साधु जातो विधिरयं, कार्योऽतः परमेव मे। अर्हच्चैत्येऽद्य इति ध्यानं, श्राद्धस्य शुभवृद्धये ॥ ३ ॥ अर्हत्पूर्विकया भक्त्या, ये च कुर्वन्ति यात्रिकाः। तेऽपि प्रवर्द्धयन्त्येव, भावं श्रद्धानशालिनाम् ॥ ४ ॥ २ यजेर्देवपूजार्थत्वाद्भावपूजा, द्रव्यस्तवस्याप्यस्योक्तविधिशुद्धिद्वारा ऽऽज्ञाराधनलक्षणभावपूजागर्भितत्वात्

गेणियं, 'तिष्ठंति यथा च ते तथा कार्यम्' ते साधवो यथा च तिष्ठन्ति तथा विधेयं, कथं पुनस्तेषां साधूनां सबालवृद्धानां तत्राऽऽयतनेऽवस्थानमित्याह--अक्षयनीव्या हि 'नीविर्मूलधनं स्यादि'ति प्रसिद्धिः, अक्षया चासौ नीविश्च तया करणभूतया यत्तन्मूलधनमायतनसंबंधि तत्सच्चेमयत्नेन परिपालयद्भिः संवर्द्धयद्भिश्चाक्षयं कर्त्तव्यमित्यक्षयनीविः अक्षयनीतिर्वा, बालवृद्धग्लानसाधुसाधर्म्मिकप्रभृतीनां हि तदुपष्टंभादेव साधूनां तत्रावस्थानं प्रकल्पते, अन्यथैतद्गुणमन्तरेण क्षेत्रान्तरमाश्रयणीयं स्यात्, तेनासौ लोकोत्तरतत्त्वसंप्राप्तिव्यवस्थितो गृही सर्व्वं देशकालाद्यपेक्षया साध्ववस्थानायैवं विधत्ते । 'एवं ज्ञेयमिदं वंशतरकाण्डं' एवम्--उक्तन्यायेन ज्ञेयमिदं--जिनभवनं जीर्णोद्धारद्वारेणानेकपुरुषसन्तानमाश्रित्य स्वपरोपकारकत्वेन वंशस्य सकलस्यैव तरकाण्डं--तरणोपायरूपः, अनेन हि एवं कुर्वता सकलोऽपि भाविपुरुषप्रवाहः सद्धर्म्मावाप्त्या संसाराम्बुनिधेस्तारितो भवति, स्ववंशजपूर्वपुरुषपक्षपातेन सद्धर्म्मप्रवृत्त्युपलंभादिति ॥१५॥

ननु च पृथिव्याद्युपमर्दमंतरेण जिनभवनकारणं न संभवति, तत्र च नियमेन हिंसा अंगीकर्त्तव्येत्याशंक्याह—

**यतनातो न च हिंसा यस्मादेषैव तन्निवृत्तिफला। तदधिकनिवृत्तिभावाद्विहितमतोऽदुष्टमेतदिति ॥१६॥६**

यतनातः-प्रयत्नात् शास्त्रोक्तात् न च-नैव हिंसा, यथोक्तं-"रागदोसविउत्तो जोगो असढस्स होइ जयणा उ" एवं यतनालक्षणाभिधानाद्रागद्वेषविमुक्तत्वेन भावतो हिंसानुपपत्तेः, तस्याश्च भावहिंसायाः शास्त्रे परिहर्त्तव्यत्वेन प्रतिपादनात्, द्रव्यहिंसामप्यङ्गीकृत्य यस्मादेषैव-यतनैव तन्निवृत्तिफला-हिंसानिवृत्तिफला, कथं पुनर्हिंसानिवृत्तिफलत्वं यतनाया इत्याशङ्क्याह-तदधिकनिवृत्तिभा-

१ श्रुतस्तवधारणामाल्पत्तिरकारण विना साधूनां द्रव्यस्तवनियोजनायोगात् २ यथाऽसिसन्धिविशेषयुद्धेन तेन बालवृद्धग्लानसाधुसाधर्मिकप्रभृतीनामुपष्टंभादाधार्मिकादिदोषरहितमनियतवर्त्तिमण्डपादौ साधूनामवस्थानं धर्मोपदेशाय कल्पते

यात् नन्वी-हिंसायामपिरनिरागिः-अधिसारंभनिवृत्तिमन्नावान्, तत्र हि जिनभवनादिविधाने प्रयत्नपूर्वकं प्रवर्त्तमानस्य निष्फलपरिहारेण मन्स्येव फलं यतोऽस्यमेवारंभांतरेभ्योऽस्मि गरीयान् विशेष इति, 'विहितमतोऽदुष्टमेतदिति' विहितं शास्त्रे जिनभवनमतो होषदुष्टं-अदोषवत् एतत्-पूर्वोक्तं जिनभवनकारणमिति[1] ॥ १६ ॥ ६ ॥ इति षष्ठं षोडशकम् ॥

## ॥ अथ सप्तमं षोडशकम् ॥

एवं जिनभवनकारणविधानमभिधाय तद्बिम्बस्य कारयितव्यतां प्रत्याह—

**जिनभवने तद्बिम्बं कारयितव्यं द्रुतं तु बुद्धिमता । साधिष्ठानं ह्येवं तद्भवनं वृद्धिमद्भवति ॥ १ ॥**

जिनभवने-जिनायतने तद्बिम्बं-जिनबिम्बं कारयितव्यं-कारणीयं द्रुतं तु-शीघ्रमेव बुद्धिमता-बुद्धिसंपन्नेन, किमिति द्रुतं कारयितव्यमित्याह-हि-यस्मात् साधिष्ठानं-साधिष्ठातृकमेव जिनबिम्बेनैव तद्भवनं प्रस्तुतं वृद्धिमद्भवति-वृद्धिभाग्भवति ॥ १ ॥ तद्बिम्बकारणविधिमाह—

**जिनबिम्बकारणविधिः काले पूजापुरस्सरं कर्तुः । विभवोचितमूल्यार्प्पणमनघस्य शुभेन भावेन ॥ २ ॥**

जिनबिम्बकारणविधिः अभिधीयत वाक्यशेषः, काले-अवसरे पूजापुरःसरं-भोजनपत्रपुष्पफलपूजापूर्वकं कर्तुः-शिल्पिनः

---

1 विहितारंभे न निरारंभतामात्रिर्भावनैनद्रूपतापत्तिः, एकानुष्ठानस्य विहितान्यानपवादकत्वात्, अन्यथा दानादीनामपि तेनान्यथासिद्ध्यापत्तेरिति दिक्

वि (वै) ज्ञानिकस्य विभवोचितस्य मूल्यस्य–धनस्यार्प्पणं–समर्प्पणं अनघस्य–अव्यसनस्य शुभेन–प्रशस्तेन भावेन–अन्तःकरणेन ॥ २ ॥ 'अनघस्ये'त्युक्तं, तद्व्यतिरेकेणाह—

**नार्पणमितरस्य तथा युक्त्या वक्तव्यमेव मूल्यमिति। काले च दानमुचितं शुभभावेनैव विधिपूर्वम् ॥३॥**

इतरस्य–स्त्रीमद्यद्यूतादिव्यसनवतो नार्प्पणं तथा क्रियते यथाऽनघस्य, युक्त्या–लोकन्यायेन 'वक्तव्यमेव मूल्यमिति' इति–एवं स्वरूपं मूल्यमिदं वक्तव्यं, काले च–प्रस्तावे च दानमुचितं, मूल्यस्येति गम्यते, शुभभावेनैव, नाशुभभावेन, विधिपूर्व–अविधिपरिहारेण ॥ ३ ॥ सव्यसनं प्रति किमेवमुपदिश्यत इत्याह—

**चित्तविनाशो नैवं प्रायः सञ्जायते द्वयोरपि हि । अस्मिन् व्यतिकर एष प्रतिषिद्धो धर्मतत्त्वज्ञैः ॥ ४ ॥**

चित्तविनाशः–चित्तकालुष्यं नैवं–उक्तनीत्या प्रायो–बाहुल्येन सञ्जायते द्वयोरपि हि–कारयितृवैज्ञानिकयोः, अस्मिन् प्रस्तुते व्यतिकरे–संबन्धे एष चित्तविनाशश्चित्तभेदः[1] प्रतिषिद्धो–निराकृतो धर्म्मतत्त्वज्ञैः–धर्म्मस्वरूपवेदिभिः ॥ ४ ॥ 'अस्मिन् व्यतिकर' इत्युक्तं, तमेवाश्रित्याह—

**एष द्वयोरपि महान् विशिष्टकार्यप्रसाधकत्वेन । संबन्ध इह क्षुण्णं न मिथः सन्तः प्रशंसन्ति ॥ ५ ॥**

एषः–योगो द्वयोरपि, पूर्वोक्तयोः महान्–गुरुः विशिष्टकार्यप्रसाधकत्वेन–जिनबिम्बनिर्व्वर्त्तकत्वेन इह–संबन्धे क्षुण्णं–वैकल्यं न मिथः–परस्परं सन्तः–सत्पुरुषाः प्रशंसन्ति–स्तुवन्ति ॥ ५ ॥ जिनबिम्बकारणे भावप्राधान्यमुररीकृत्याह—

---

1 लोकस्यापि चित्तभेदस्य परलोकहानिकारणत्वादितिभावः

यावन्तः परितोषाः कारयितुस्तत्समुद्भवाः केचित् । तद्बिम्बकारणानीह तस्य तावन्ति तत्त्वेन ॥ ६ ॥

यावन्तो-यत्परिमाणाः परितोषाः-प्रीतिविशेषाः कारयितुः-अधिकृतस्य तस्य तत्समुद्भवा-बिम्बसमुद्भवाः केचित्--केऽपि, निरनुबन्धोऽप्यर्थे, तद्बिम्बकारणानि-जिनबिम्बनिर्वर्त्तनानि इह प्रक्रमे तस्य-कारयितुस्तावन्ति-तत्परिमाणानि तत्त्वेन-परमार्थेन ॥६॥

'चित्तविनाशोऽत्र प्रतिषिद्ध' इत्युक्तं तमाश्रित्याह—

अप्रीतिरपि च तस्मिन् भगवति परमार्थनीतितो ज्ञेया । सर्वापायनिमित्तं ह्येषा पापा न कर्त्तव्या ॥७॥

अप्रीतिरपि च-चित्तविनाशरूपा तस्मिन्--शिल्पिनि क्रियमाणा भगवति-जिने परमार्थनीतितः-परमार्थन्यायेन कारयितुर्ज्ञेया, 'सर्वापायनिमित्तं हि' यतः सर्वेषामपायानां-प्रत्यवायानां निमित्तमप्रीतिस्तस्माद् एषा पापाऽप्रीतिः न कर्त्तव्या--न विधेया ॥ ७ ॥ कथं पुनस्तत्कारयितव्यमित्याह—

अधिकगुणस्थैर्नियमात् कारयितव्यं स्वदोर्हदैर्युक्तम् । न्यायार्जितवित्तेन तु जिनबिम्बं भावशुद्धेन ॥८॥

अधिकगुणस्थैः-अधिकगुणवर्तिभिः प्राक्तनकालापेक्षया नियमात्-नियमेन कारयितव्यं--कारणीयं स्वदोर्हदैः--स्वमनोरथैः शिल्पिगतैः युक्तं-सहितं न्यायार्जितवित्तेन तु--न्यायोपात्तद्रविणेन तु करणभूतेन जिनबिम्बं--जिनप्रतिमारूपं 'भावशुद्धेन' भावेन-

1 तावत्परिमाणाः कस्य भावानुसारित्वात्तत: प्रीतिविशेष इह सानुबन्धः कर्त्तव्य इति हृदयम् 2 कारणारुचिः कार्यारुचिमूलेतिपरमार्थन्यायेन [illegible] 3 एवं शिल्पिगताप्रीतिरपुष्टा ततस्तद्गतानाहार्येच्छया प्रीतिमुत्पाद्य जिनबिम्बं कारयितव्यमित्यनुशास्ति

यदन्तःकरणलक्षणेन शुद्धं—यन्न्यायार्जितवित्तं तेन ॥ ८ ॥ स्वदौर्हृदैर्युक्तमित्युक्तं, तद्विवरीपुराह—

**अत्रावस्थात्रयगामिनो बुधैर्दौर्हृदाः समाख्याताः । वालाद्याश्चैत्ता यत्तत्क्रीडनकादि देयमिति ॥ ९ ॥**

अत्र-जिनबिम्बकारणे अवस्थात्रयगामिनो- वालकुमारयुवलक्षणावस्थात्रयगामिनो बुधैः-विद्वद्भिर्दौर्हृदा-मनोरथाः समाख्याताः- कथिता 'वालाद्याश्चैत्ता यत्' चित्ते भवाश्चैत्ताः शिल्पिचित्तगता यद् यस्मात्तु वर्त्तन्ते तत्—तस्माच्चैत्तवालाद्यवस्थात्रयमनोरथसंपत्तये 'क्रीडनकादि' क्रीडनकं-विस्मयकारि भोगोपकरणजातं देयम्—उपढौकनीयमिति-एवंप्रकारं, इदमुक्तं भवति-शिल्पी वालो युवा मध्यम-वया वा प्रतिमानिर्माणे व्याप्रियते, तस्य तदवस्थात्रयमनादृत्य प्रतिमागतावस्थात्रयदर्शिनश्चैत्ता ये दौर्हृदाः समुत्पद्यन्ते तत्परिपूरणाय यतितव्यम् ॥ ९ ॥ 'भावशुद्धेने'त्युक्तं तदुपदर्शनायाह—

**यद्यस्य सत्कमनुचितमिह वित्ते तस्य तज्जमिह पुण्यम्। भवतु शुभाशयकरणादित्येतद्भावशुद्धं स्यात्१०**

यत्—स्वरूपेण यन्मात्रं यस्य सत्कं-यस्य संबन्धि, वित्तमिति गम्यते, अनुचितं-अयोग्यमिह—वित्ते मदीये कथंचिदनुप्रविष्टं तस्य-पुरुषस्य तस्माज्जातं तज्जमिह—बिम्बकरणे पुण्यं—पुण्यकर्म्म भवतु—अस्तु शुभाशयकरणात्—शुभपरिणामकरणादिति-एवमुक्तनीत्या एतन्न्यायार्जितं वित्तं पूर्वोक्तं भावशुद्धं स्यात्, परकीयवित्तेन स्ववित्तानुप्रविष्टेन पुण्यकरणानभिलापाद्भावेन-अन्तः-करणेन शुद्धं भवेत् ॥ १० ॥ 'जिनबिम्बकारणविधिरभिधीयत' इत्युक्तं तद्गतमेव विशेषमाह—

**मन्त्रन्यासश्च तथा प्रणवनमःपूर्वकं च तन्नाम । मन्त्रः परमो ज्ञेयो मननत्राणे ह्यतो नियमात् ॥ ११ ॥**

मन्त्रन्यासश्च तथा-जिनविम्बे कारयितव्यतयाऽभिप्रेते मन्त्रस्य न्यासो विधेयः, कः पुनः स्वरूपेण मन्त्र इत्याह-'प्रणवनमःपूर्वकं च तन्नाम मन्त्रः परमो ज्ञेयः' प्रणवः-ॐकारो नमःशब्दश्च तौ पूर्वौ-आदी यस्य तत् प्रणवनमःपूर्वकं तस्य-विवक्षितस्य ऋषभादेर्नाम तन्नाम मन्त्रः परमः-प्रधानो ज्ञेयो-वेदितव्यः, किमित्याह-'मननत्राणे ह्यतो नियमात्' हि्र्यस्माद् अतः-प्रणवनमःपूर्वनाम्नः सकाशात् ज्ञानरक्षणे नियमाद्भवत इतिकृत्वा मन्त्र उच्यते तन्नामैवेति ॥११॥ ननु च रत्नकनकादिभिः सुरूपमहाविम्बकरणे विशिष्टं फलं आहोस्वित् परिणामविशेषादित्याशङ्क्याह—

बिम्बं महत् सुरूपं कनकादिमयं च यः खलु विशेषः। नास्मात्फलं विशिष्टं भवति तु तदिहाशयविशेषात् १२

बिम्बं-प्रतिमारूपं महत् प्रमाणतः सुरूपं-विशिष्टाङ्गावयवसन्निवेशसौन्दर्यं कनकादिमयं च-चतुर्वर्ण(सुवर्ण)रत्नादिमयं च यः खलु विशेषो बाह्यवस्तुगतः 'नास्मात्फलं विशिष्टं' अस्मादेव विशेषान्न फलविशेषो-न फलमधिकं, नैतदविनाभावि फलमित्यर्थः, भवति तु-भवत्येव तद्-विशिष्टं फलं इह-प्रक्रमे आशयविशेषात्, यत्र भावोऽधिकस्तत्र फलमप्यधिकमिति हृदयम्[1]॥१२॥ 'आशयविशेषाद्विशिष्टं फल'मित्युक्तं, स एव आशयविशेषो यादृक्षः प्रशस्तो भवति तादृक्षमाह—

आगमतन्त्रः सततं तद्वद्भक्त्यादिलिङ्गसंसिद्धः। चेष्टायां तत्स्मृतिमान् शस्तः खल्वाशयविशेषः ॥१३॥

'आगमतन्त्रः' आगमपरतन्त्रः-आगमानुसारी सततं-अनवरतं स आगमो विद्यते येषां ते तद्वन्तस्तेषु भक्त्यादीनि-भक्ति-

1 भावविशेषाधायकतया च बाह्यविशेषोऽप्याद्रियत एव, तदुक्तं व्यवहारभाष्ये-"लक्खणजुत्ता पडिमा पासाईआ समत्तलङ्कारा। पल्हायइ जह व मण तह णिज्जरो वियाणाहि॥१॥त्ति"

गाप्तिः-शलालाभः परमं निर्वाणमिव विम्भात्, धान्यनिर्वाणावाप्त्योः साम्यं दर्शयति[1] ॥१६॥ ७ ॥ इति सप्तमं षोडशकम् ॥



## ॥ अथ अष्टमं षोडशकम् ॥

एवं बिम्बकारणविधिमुपदर्श्य प्रतिष्ठाविधिमाह—

**निष्पन्नस्यैवं खलु जिनबिम्बस्योदिता प्रतिष्ठाऽऽशु । दशदिवसाभ्यन्तरतः सा च त्रिविधा समासेन॥१॥**

निष्पन्नस्य-निष्पादितस्य एवम्-उक्तरीत्या, खलुशब्दो वाक्यालङ्कारे, जिनबिम्बस्य-अर्हत्प्रतिमायाः उदिता-गदिता प्रतिष्ठा-प्रतिष्ठानं आशु-शीघ्रं दशदिवसाभ्यन्तरतो-दशदिवसाभ्यन्तरे, सा च त्रिविधा समासेन-सा च प्रतिष्ठा त्रिभेदा सङ्क्षेपेण ॥१॥ त्रैविध्यमेवाह—

**व्यक्त्याख्या खल्वेका क्षेत्राख्या चापरा महाख्या च । यस्तीर्थकृद्यदा किल तस्य तदाऽऽद्येति समयविदः २**

व्यक्त्याख्या खल्वेका वक्ष्यमाणा, क्षेत्राख्या च तथैव अपरा, महाख्या च-महाप्रतिष्ठा, व्यक्त्याख्यास्वरूपमाह-यस्तीर्थकृद्यदा किल वर्तमान इत्यर्थस्तस्य तदाद्येति समयविदः-तस्यैव प्रतिष्ठा व्यक्त्याख्या ॥ २ ॥ क्षेत्राख्यामाह—

---

१ विधिनिर्मापणमनुसरणे, अन्यथाऽशाने:, विधिना हरिकरणबिम्बकरणयोः पलालाभ्युदययोर्धान्यनिर्वाणावाप्त्योश्च साम्यमिति सिद्धं

बहुमानविनयपूजनादीनि यानि लिङ्गानि तैः संसिद्धो–निश्चितः तद्भक्त्यादिलिङ्गसंसिद्धः, चेष्टायां–व्यापारकरणे तत्स्मृतिमान्–आगमस्मृतियुक्तः शस्तः खलु–प्रशस्तो भवत्याशयविशेषः–परिणामभेदः॥१३॥एवमाशयविशेषमभिधाय तेन बिम्बकरणं समर्थयन्नाह–

एवंविधेन यद्बिम्बकारणं तद्वदन्ति समयविदः। लोकोत्तरमन्यदतो लौकिकमभ्युदयसारं च ॥ १४ ॥

एवंविधेनाशयेन यद्बिम्बकारणं पूर्वोक्तं तद् वदन्ति–प्रतिपादयन्ति समयविदः–शास्त्रज्ञा लोकोत्तरं–आगमिकं 'अन्यदतो लौकिकं' अतः–अस्मादाशयविशेषसमन्वितात् जिनबिम्बकारणात् अन्यल्लौकिकं वर्त्तते, अभ्युदयसारं च तद्भवति ॥ १४ ॥ 'लौकिकमभ्युदयसार'मित्युक्तं, लोकोत्तरं कीदृगित्याह—

लोकोत्तरं तु निर्वाणसाधकं परमफलमिहाश्रित्य। अभ्युदयोऽपि हि परमो भवति त्वत्रानुषङ्गेण ॥१५॥

लोकोत्तरं तु पुनर्निर्वाणसाधकं–मोक्षसाधकं परमफलमिहाश्रित्य–प्रकृष्टफलमङ्गीकृत्य अभ्युदयोऽपि–स्वर्गादिः परमः–प्रधानो 'भवति त्वत्रानुषङ्गेण' भवत्येनात्र प्रसङ्गेन[1], न मुख्यवृत्त्या[2] ॥१५॥ प्रधानानुषङ्गिकप्रतिपत्त्यर्थं दृष्टान्तमाह—

कृषिकरण इव पलालं नियमादत्रानुषाङ्गिकोऽभ्युदयः। फलमिह धान्यावाप्तिः परमं निर्वाणमिव बिम्बात् १६

कृषिकरण इव पलालं प्रतीतं नियमादत्र–जिनबिम्बकारणे आनुषंगिकोऽभ्युदयः–स्वर्गादिः फलमिह दृष्टान्ते धान्या-

---

१ उद्देश्यसिद्धावयर्जनीयभावव्यापारलक्षणेन २ सच्छायपथेनास्य मोक्षनयनस्वभावत्वात्

प्राप्तिः-शस्यलाभः परमं निर्वाणमिव विम्मात, धान्यनिर्वाणाप्त्योः साम्यं दर्शयति[1] ॥१६॥ ७ ॥ इति सप्तमं षोडशकम् ॥



## ॥ अथ अष्टमं षोडशकम् ॥

एवं बिम्बकारणविधिमुपदर्श्य प्रतिष्ठाविधिमाह—

निष्पन्नस्यैवं खलु जिनबिम्बस्योदिता प्रतिष्ठाऽऽशु । दशदिवसाभ्यन्तरतः सा च त्रिविधा समासेन॥१॥

निष्पन्नस्य-निष्पत्तिमतः एवम्-उक्तरीत्या, खलुशब्दो वाक्यालङ्कारे, जिनबिम्बस्य-अर्हत्प्रतिमायाः उदिता-गदिता प्रतिष्ठा-प्रतिष्ठानं आशु-शीघ्रं दशदिवसाभ्यन्तरतो-दशदिवसाभ्यन्तरे, सा च त्रिविधा समासेन-सा च प्रतिष्ठा त्रिभेदा सङ्क्षेपेण ॥१॥ त्रैविध्यमेवाह—

व्यक्त्याख्या खल्वेका क्षेत्राख्या चापरा महाख्या च । यस्तीर्थकृद्यदा किल तस्य तदाऽऽद्येति समयविदः २

व्यक्त्याख्या खल्वेका वक्ष्यमाणा, क्षेत्राख्या च तथैव अपरा, महाख्या च-महाप्रतिष्ठा, व्यक्त्याख्यास्वरूपमाह-यस्तीर्थकृद्यदा किल वर्तमान इत्यर्थस्तस्य तदाद्येति समयविदः-तस्यैव प्रतिष्ठा व्यक्त्याख्या ॥ २ ॥ क्षेत्राख्यामाह—

---

१ विशिष्टानमनुरागने, अन्यथाऽप्रवृत्तेः, विधिना कृषिकरणविक्रयकरणयोः पलालाभ्युदययोर्धान्यनिर्वाणावाप्त्योश्च साम्यमिति सिद्धं

ऋषभाद्यानां तु तथा सर्वेषामेव मध्यमा ज्ञेया । सप्तत्यधिकशतस्य तु चरमेह महाप्रतिष्ठेति ॥ ३ ॥

ऋषभाद्यानां तु तथा–तीर्थकृतां चतुर्विंशतेः सर्वेषामेव मध्यमा ज्ञेया, भरतैरावतयोश्चतुर्विंशत्युत्पत्तेः, ततः क्षेत्रापेक्षया क्षेत्राख्या, सप्तत्यधिकशतस्य तु–महाविदेहभरतैरावतापेक्षया सर्वक्षेत्राङ्गीकरणेन चरमेह महाप्रतिष्ठेति, गुणनिष्पन्नाभिधाना ॥३॥ आह–किमियं प्रतिष्ठा नाम ?, किं मुख्यस्यैव देवताविशेषस्य मुक्तिरूपापन्नस्य आहोस्विदन्यस्य संसारवर्त्तिनः?, तत्र न तावन्मुख्यस्य युज्यते, तस्य मन्त्रादिभिः संस्कारविशेषैरानयनासंभवात्, तैरानीयमानस्य च मुक्तत्वविरोधाद्, अथान्यस्य तत्रापि संसारवर्त्तिनो नियमेन देवजात्यनुप्रविष्टस्य न सन्निधानं संस्कारविशेषैरपि संभवति; कादाचित्कं तु सन्निधानं न प्रतिष्ठां प्रयोजयति, सर्वदा तस्याभावादिति पर्यनुयोगे सत्यात्मीयभावस्यैव विशिष्टस्य प्रतिष्ठात्वप्रतिपादनायाह—

भवति च खलु प्रतिष्ठा निजभावस्यैव देवतोद्देशात् । स्वात्मन्येव परं यत् स्थापनमिह वचननीत्योच्चैः ॥४॥

भवति च खलु प्रतिष्ठा–शास्त्राभिमता निजभावस्यैव–कारयितृभावस्यैव देवतोद्देशात्–मुख्यदेवतोद्देशेन, स्वात्मन्येव–स्वजीव एव परं–प्रधानं यद्–यस्मात्स्थापनमिह प्रतिष्ठा, न निजभावं देवताविषयमन्तरेणान्यस्य, वचननीत्या–आगमनीत्या, उच्चैरत्यर्थं, बाह्यजिनबिम्बादिगता तु प्रतिष्ठा बहिर्निजभावोपचारद्वारेण, निज एव हि भावो मुख्यदेवताविशेषस्वरूपालम्बनः स एवायमित्यभेदोपचारेण विदुषां भक्तिमतां पूज्यतापदवीमासादयति ॥ ४ ॥ किमिति स्वात्मन्येव परं स्थापनमुच्यते, नान्यत्रेत्याह—

१ यद्यपि वचनानुष्ठानप्युक्तिमहिम्ना विहितक्रियामात्र एव नियमतः स्मर्यमाणभगवद्गुणानां स्वात्मनि स्थापनं संभवति, तथापि यदेकगुणसिद्ध्युद्देशेन

बीजमिदं परमं यत् परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तैषैवेति विज्ञेया ॥ ५ ॥

बीजं—कारणमिदं निजभावस्यैव देवतोद्देशात् स्वात्मनि स्थापनं वर्तते परमं—प्रधानं यद्—यस्मात् परमाया एव—प्रकृष्टाया एव समरसापत्तेः—समतापत्तेः, इदमुक्तं भवति—मुख्यदेवतास्वरूपगतवीतरागत्वादिगुणव्यवस्थापनं चेतसि तेनैव मुख्यदेवतास्वरूपेण समतापत्तेर्हेतुर्भवति । स्थाप्येन—बिम्बेन तदेवंविधं स्थापनं समरसापत्तिबीजं संभवतीतिकृत्वा मुख्या—निरुपचरिता हन्त—प्रत्यवधारणे एषैव—निजभावस्यैव प्रतिष्ठा, नान्या मुख्येति विज्ञेया ॥ ५ ॥ ननु च मुक्त्यादिव्यवस्थितस्यैव प्रतिष्ठा किं नेष्यत इत्याशङ्क्याह—

मुक्त्यादौ तत्त्वेन प्रतिष्ठिताया न देवतायास्तु । स्थाप्ये न च मुख्येयं तदधिष्ठानाद्यभावेन ॥ ६ ॥

मुक्त्यादौ स्थाने तत्त्वेन—परमार्थेन प्रतिष्ठिताया—व्यवस्थिताया न देवतायास्तु—नैव देवतायाः प्रतिष्ठा, विप्रकर्षात्,

---

यदनुसन्धानं विहितं तत्तत्तद्गुणद्वारा भावः परमात्मसमापत्तिप्रयुक्तस्य संभवति, इह तु स्थापनोद्देशेनैव विधिप्रवृत्तेस्तस्या भावतः सर्वगुणारोपविषयत्वात् सर्वैरेव गुणैः स एवाहमिति स्वात्मनि परमात्मा स्थापितो भवतीति महान् विशेषः, एतदेवोक्तमिति पदेनाभिव्यज्यते, अयं भावस्तात्त्विकप्रतिष्ठा, बाह्या तु जिनबिम्बादिष्वपि एतावन्निजभावस्यैव मुख्यदेवताविषयस्योपचारात्मिका प्रतिष्ठितत्वज्ञानाहितभक्तिविशेषेण लोकानां विशिष्टपूजाफलप्रयोजिकेति द्रष्टव्यं, एतेन प्रतिष्ठाजनितमुपगतं पूजाफलप्रयोजकं, परेषां तदभावात् तददृष्टक्षये प्रतिमापूज्यतानापत्तेश्चाण्डालादिस्पर्शेन व्यधिकरणेन तन्नाशायोगाच्चेति प्रतिष्ठाहिता काचनाऽतिरिक्तसंस्कारस्या शक्तिः पूजाफलप्रयोजिकेति मीमांसकमीमांसितमपास्तं, प्रतिष्ठितत्वज्ञानाहितभक्तिविशेषद्वारा प्रतिष्ठायाः पूजाफलप्रयोजकत्वात्, भगवदवस्तानांदिसन्निधानस्य च भक्तिविशेषव्याघातकत्वेनानुपपत्त्यभावात्, शक्तिपक्षे चाप्रतिष्ठितत्वभ्रमेऽपि विशिष्टपूजाफलापत्तेः, एतेन प्रतिष्ठाऽध्वंस एवास्तु प्रयोजक [स्वतां] भावविनिष्टः पूजाफलप्रयोजक इति मणिकृन्मतमप्यपास्तमिति दिग् । भक्तिविशेषाधायकतयैव यतः प्रतिष्ठा फलवती तत एव स्वप्रतिष्ठाविधानरहितेषु अपि गुरुमन्दिरेषु भक्तिविशेषाधायकतयाऽऽद्रियते, तथा चोक्तं ग्रन्थकृतैव पूजाविंशिकायां—"सयकारियाइ एसा जायइ ठवणाइ बहुफला

स्थाप्ये-बिम्बे नच मुख्येयं-नैव मुख्या देवताविषया प्रतिष्ठा मन्त्रादिसंस्कारपूर्व्विका 'तदधिष्ठानाद्यभावेन' तया-देवतया अधिष्ठानं-आश्रितत्वं आदिशब्दात्सन्निधानग्रहः, तदभावेन हेतुना, अवीतरागासर्वज्ञरूपसंसारिदेवविषया त्वमुख्या तदधिष्ठानादि-भावेन संभवत्यपीति ॥ ६ ॥ अत्रैवाभ्युच्चयमाह—

इज्यादेर्न च तस्या उपकारः कश्चिदत्र मुख्य इति । तदतत्त्वकल्पनैषा बालक्रीडासमा भवति ॥ ७ ॥

इज्या-पूजा तदादेः सत्काराभरणस्नात्रादेः नच-नैव तस्याः-देवतायाः प्रस्तुताया उपकारः-सुखानुभवसम्पादनलक्षणः कश्चिदत्र मुख्य इति, न कश्चिन्निरुपचरितो मुख्यदेवताया उपकारः संभवति, तत्-तस्मादतत्त्वकल्पनैषा-अपरमार्थकल्पनैषा मुक्तिगतदेवतोपकारविषया बालक्रीडासमा भवति-बालक्रीडया तुल्येयं वर्त्तते, यथा बालो नानाविधैरुपायैः क्रीडासुखमनुभवति,

केई । गुरुकारियाइ अन्ने विसिट्ठविहिकारियाए अ ॥ १ ॥ थंडिल्लेऽवि य एसा मणठवणाए पसत्थिगा चेव । आगाससोमयाईहिं एत्थमुवलेवणाईं हियं ॥ २ ॥ उवयारगा इह सोयभोगसाहारणाण इट्ठफला । किंचिविसेसेण तओ सव्वे ते विभइयव्वत्ति ॥ ३ ॥ आसामर्थलेशो यथा—स्वयंकारितया स्वारसैषा पूजा बहुफला जायत इति केचिन्मन्यन्ते, गुरवो-मातृपितृपितामहादयस्तैः कारितयेत्यन्ये, विशिष्टविधिकारितयेत्यपरे, स्थण्डिले-शुद्धस्थानमात्रेऽप्येषा मन स्थापनया विशिष्टविधिसामग्रीं विना पञ्चनमस्कारस्थापनामात्रेणापि प्रशस्ताऽभिमता, अत्राकाशगोमयादिभिः-पवित्रोर्ध्वस्थगोमयादिभिरुपलेपनादि भूम्यादेर्हितं, तावन्मात्रविधेरपि फलश्रवणात्, एते सर्वेऽपि पक्षाः स्वोपयोगसाधारणानामनुष्ठानानां उवयारगत्ति-उपकारकानीति किंचिद्विशेषेणेष्टफलाः, कर्म हि यद्यं सर्वस्योपयोगसदृशं प्रशस्तं, नतु कस्यचित् किञ्चिन्नाया प्रतिनियतं, ततो यस्य यदुपकारकं तस्य तदिष्टमिति स्वकृतस्थापनादिपक्षाः सर्वेऽपि विभजनीयाः, स्वकृतस्थापनादिपुरुष्या अविविदोषोपत्तौ समीचीना ममत्वकलहाद्युत्पत्तौ चासमीचीना इतिभावः । इत्थं च ये गुर्वादिप्रतिष्ठापितत्वं सर्वथाऽनुपयोगीति वदन्ति, ये च विधिप्रतिष्ठापितस्य एव निर्भरं कुर्वन्ति तेषामभिप्रायं त एव विदन्ति, कृतमतिविस्तरेण

तथा तदुपकारार्थमिष्यमाणैः पूजासत्कारादिभिर्देवताविशेषोऽपि परितोषमनुभवतीति बालक्रीडातुल्यत्वमुपकारपक्षे दोषः, ये त्वात्म-
श्रेयोऽर्थं कुर्वते पूजासत्कारादि न तेषामयं दोषो भवतीतिभावः ॥ ७ ॥ 'प्रतिष्ठा निजभावस्यैवे'त्युक्तं, तदेवानुसन्धातुमाह—

**भावरसेन्द्रात्तु ततो महोदयाज्जीवता स्व(म्र)रूपस्य । कालेन भवति परमाऽप्रतिबद्धा सिद्धकाञ्चनता॥८॥**

भावरसेन्द्रात्तु-भावो रसेन्द्र इव तस्मात्पुनः तत इति मुख्यदेवतास्वरूपालम्बनात् महोदयात्-पुण्यानुबन्धिपुण्यविभूति-लाभेन जीवतास्व(म्र)रूपस्य आत्मभाव(ताम्र)रूपस्यैव कालेन-विवक्षितेन कियतापि भवति-जायते परमा-प्रकर्षवर्त्तिनी अप्र-तिबद्धा-अप्रतिस्खलिता अनुपहता सिद्धकाञ्चनता-सिद्धसुवर्णत्वम् ॥ ८ ॥ कथं सिद्धकाञ्चनता भवतीत्याह—

**वचनानलक्रियातः कर्मेन्धनदाहतो यतश्चैषा । इतिकर्त्तव्यतयाऽतः सफलैषाऽप्यत्र भावविधौ ॥ ९ ॥**

वचनम्-आगमः सोऽनल इव तस्य क्रिया-स्वक्रियाव्यापारस्तस्या वचनानलक्रियातः 'कर्मेन्धनदाहतो यतश्चैषा' कर्मेन्ध-नस्य दाहतो यतश्चैषा-सिद्धकाञ्चनता भवति, नच वचनानलक्रियया कर्मेन्धनदाहमन्तरेण भावरसेन्द्रादेव सिद्धकाञ्चनता सम्पद्यते, तस्माद्वचनानलक्रियापि कर्मेन्धनदाहनिमित्तभूता आश्रयणीया, इतिकर्त्तव्यतया-इन्धनप्रक्षेपकल्पशुभव्यापाररूपया वचनानल-क्रियागतया, प्रतिष्ठाया वचनक्रियारूपत्वादन्तर्गतत्वं, अतो हेतोः सफला-फलवती, एषा-बिम्बगता प्रतिष्ठा अत्र प्रक्रमे भावविधौ भवति, अनेन भावप्रकारमुख्यदेवताविषयस्य भावस्य हेतुत्वेन प्रसिद्धेरिति ॥९॥ 'सफलैषा प्रतिष्ठे'त्युक्तं, सा कथं कर्त्तुर्जायत इत्याह-

**एषा च लोकसिद्धा शिष्टजनापेक्षयाऽखिलैवेति । प्रायो नानात्वं पुनरिह मन्त्रगतं बुधाः प्राहुः ॥ १० ॥**

एषा च प्रतिष्ठा लोकसिद्धा-पूर्वाचार्यसिद्धा पुरुषपारम्पर्यक्रमायाता शिष्टजनापेक्षया-विशिष्टभव्यापेक्षया अखिलैव-सर्वैव लोकलोकोत्तरगता प्रायो-बाहुल्येन नानात्वं-विशेषः पुनरिह-प्रक्रमे लोकोत्तरप्रतिष्ठायां मन्त्रगतं-मन्त्रविषयं बुधा-आचार्याः प्राहुः-ब्रुवते ॥ १० ॥ नानात्वमेवाह—

**आवाहनादि सर्व्वं वायुकुमारादिगोचरं चात्र । सम्मार्जनादिसिद्धयै कर्त्तव्यं मन्त्रपूर्वं तु ॥ ११ ॥**

आवाहनादि सर्व्वं-आवाहनपूजनस्वकर्म्मनियोगादि वायुकुमारादिगोचरं चात्र-वायुमेघकुमारादिविषय चात्र प्रतिष्ठायां संमार्ज्जनादिसिद्ध्यै-क्षेत्रसंशोधनाभिवर्षणादिनिष्पत्तये कर्त्तव्यं मन्त्रपूर्व्वं तु-कुलक्रमायातमंत्रपूर्वकम् ॥ ११ ॥ कथं पुनः सा प्रतिष्ठा कर्त्तव्येत्याह—

**न्याससमये तु सम्यक् सिद्धानुस्मरणपूर्वकमसंगम्। सिद्धौ तत्स्थापनामिव कर्त्तव्यं स्थापनं मनसा॥१२॥**

न्याससमये तु-मन्त्रन्यासकाले सम्यग्-अवैपरीत्येन सिद्धानुस्मरणपूर्व्वकं-परमपदस्थसिद्धानुस्मृतिमूलम्-असङ्गं-शारीरमानससङ्गरहितमत्यन्तोपयुक्ततया मुक्तौ-परमपदे तत्स्थापनमिव-सिद्धस्थापनमिव, केवलदर्शनादिचिच्छक्तिसमन्वितं, कर्त्तव्यं-विधेयं स्थापनं-प्रतिष्ठा मनसा-अन्तःकरणेन, भूयान् भावव्यापार एवायमितिकृत्वा ॥ १२ ॥ ननु च येयं निजभावस्य देवतोद्देशेन प्रतिष्ठा सा किमुच्यत इत्याह—

**बीजन्यासः सोऽयं मुक्तौ भावविनिवेशतः परमः। सकलावञ्चकयोगप्राप्तिफलोऽभ्युदयसचिवश्च ॥ १३ ॥**

'बीजन्यासः सोऽयं' बीजस्य–पुण्यानुबन्धिपुण्यस्य सम्यक्त्वस्य वा न्यासो–निक्षेपोऽयं वर्त्तते येयं प्रतिष्ठानाम, कथं बीजन्यास इत्याह–मुक्तौ–सिद्धौ भावविनिवेशतः–सदन्तःकरणविनिवेशात् परमः–प्रधानः सकलानामवञ्चकयोगानां प्राप्तिः फलमस्य बीजन्यासस्य स तथा, अभ्युदयसचिवश्च–अभ्युदयसहायश्च, अवञ्चकयोगाश्च त्रयः, तद्यथा–सद्योगावञ्चकः क्रियावञ्चकः फलावञ्चकः, तत्स्वरूपं चेदं–"सद्भिः कल्याणसंपन्नैर्दर्शनादपि पावनैः। तथा दर्शनतो योग, आद्यावञ्चक उच्यते ॥१॥ तेषामेव प्रणामादिक्रियानियम इत्यलम्। क्रियाऽवञ्चकयोगः स्यान्महापापक्षयोदयः ॥२॥ फलावञ्चकयोगस्तु, सद्भ्य एव नियोगतः। सानुबन्धफलावाप्तिर्धर्म्मसिद्धौ सतां मता ॥ ३ ॥" ॥ १३ ॥ 'बीजन्यास' इत्युक्तं, अयं च संवर्द्धनीय इत्याह—

*लवमात्रमयं नियमादुचितोचितभाववृद्धिकरणेन । क्षान्त्यादियुतैर्मैत्र्यादिसंगतैर्बृंहणीय इति ॥१४॥*

लवमात्रं–स्तोकमात्रं अयं-प्रतिष्ठागतो भावो नियमात्- नियमेन उचितोचितभाववृद्धिकरणेन–उचितोचिता चासौ देशकालाद्यनुरूपा भाववृद्धिश्च तत्सम्पादनेन क्षान्त्यादियुतैः–क्षमामार्दवार्जवसन्तोषसमन्वितैः मैत्र्यादिसङ्गतैः–मैत्रीकरुणामुदितोपेक्षासहितैः बृंहणीय इति–संवर्द्धनीय इति-एवमुक्तन्यायेन ॥ १४ ॥ 'अयं संवर्द्धनीय' इत्युक्तं, स एव विशिष्य स्तूयते—

**निरपायः सिद्धार्थः स्वात्मस्थो मन्त्रराडसङ्गश्च । आनन्दो ब्रह्मरसश्चिन्त्यस्तत्त्वज्ञमुष्टिरियम् ॥ १५ ॥**

अपायेभ्यो निर्गतो निरपायः, सिद्धा अर्था अस्मिन्निति सिद्धार्थः, स्वात्मनि तिष्ठतीति स्वात्मस्थो, न परस्थो, मन्त्रराट्–मन्त्रराजोऽयं असङ्गश्च–सङ्गविकलः आनन्दस्तद्धेतुत्वात् 'ब्रह्मरसो' ब्रह्म–सत्यं तपो ज्ञानं तद्विषयो रसोऽस्येति चिन्त्यः–चिन्तनीय-

स्तत्त्वज्ञमुष्टिरियं तत्त्वज्ञानां मुष्टिः-हितोपदेशोऽविसंवादस्थानं, एवं प्रतिष्ठागतो भावः संस्तुत इति ॥१५॥ एवं प्रतिष्ठाविधिं परिसमाप्य तच्छेपमाह—

**अष्टौ दिवसान् यावत् पूजाऽविच्छेदतोऽस्य कर्त्तव्या। दानं च यथाविभवं दातव्यं सर्वसत्त्वेभ्यः ॥१६॥८॥**

अष्टौ दिवसान् यावत्–अष्ट दिनानि मर्यादया पूजा-पुष्पबलिविधानादिभिः अविच्छेदतः–अविच्छेदेनास्य-विम्बस्य कर्त्तव्या–करणीया। दानं तु यथा(विभवं)-विभवानुसारेण दातव्यं सर्वसत्त्वेभ्यः, शासनोन्नतिनिमित्तम् ॥ १६ ॥ ८ ॥ इत्यष्टमं षोडशकम् ॥

## ॥ अथ नवमं षोडशकम् ॥

'पूजा अविच्छेदतोऽस्य कर्त्तव्ये'त्युक्तं, सैव स्वरूपतोऽभिधीयते कारिकाद्वयेन—

**स्नानविलेपनसुसुगन्धिपुष्पधूपादिभिः शुभैः कान्तम्। विभवानुसारतो यत् काले नियतं विधानेन ॥१॥**

**अनुपकृतपरहितरतः शिवदस्त्रिदशेशपूजितो भगवान्। पूज्यो हितकामानामितिभक्त्या पूजनं पूजा ॥२॥**

स्नानं गन्धद्रव्यसंयोजितं स्नात्रं वा विलेपनं–चन्दनकुङ्कुमादिभिः सुष्ठु सुगन्धि पुष्पाणि–जात्यादिकुसुमानि, तथा सुगन्धिधूपो गन्धयुक्तिप्रतीतः, तदादिभिरपरैरपि शुभैर्गन्धद्रव्यविशेषैः कान्तं–मनोहारि, विभवानुसारतो–विभवानुसारेण

यत्पूजनमिति संबन्धः, काले-त्रिसन्ध्यं स्ववृत्त्यविरुद्धे वा नियतं-सदा विधानेन-शास्त्रोक्तेन ॥ १ ॥ उपकृतं उपकारो न विद्यते उपकृतं येषां त इमेऽनुपकृताः, अकृतोपकारा इत्यर्थः, ते च ते परे च २ तेभ्यो हितं तस्मिन् रतः-अभिरतः प्रवृत्तोऽनुपकृतपरहितरतो निष्कारणवत्सलः, शिवं ददातीति शिवदः त्रिदशानामीशास्तैः पूजितो भगवान्-समग्रैश्वर्यादिसंपन्नः पूज्यः-पूजनीयो हितकामानां-हिताभिलाषिणां सत्त्वानां इति-एवंविधेन कुशलपरिणामेन भक्त्या-विनयसेवया पूजनं पूजोच्यते ॥२॥ तामेव भेदेनाह—

पञ्चोपचारयुक्ता काचिच्चाष्टोपचारयुक्ता स्यात् । ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति ॥ ३ ॥

पञ्चोपचारयुक्ता-पञ्चाङ्गप्रणिपातरूपा काचिच्चाष्टोपचारयुक्ता स्यात्-अष्टाङ्गप्रणिपातरूपा ऋद्धिविशेषादन्या-ऋद्धिविशेषो दशार्णभद्रादिगतस्तस्मादपरा प्रोक्ता सर्व्वोपचारेति सर्व्वैः प्रकारैः-अन्तःपुरहस्त्यश्वरथादिभिरुपचारो-विनयो यस्यां सा सर्व्वोपचारा, तत्राद्या "दो जाणू दोण्णि करा पंचमयं होइ उत्तमङ्गं तु" एवमेभिः पञ्चभिरुपचारैर्युक्ता, अथवा आगमोक्तैः पञ्चभिर्विनयस्थानैर्युक्ता, तद्यथा-"सचित्ताणं दव्वाणं विउसरणयाए, अचित्ताणं दव्वाणं अविउसरणाए, एगसाडिएणं उत्तरासङ्गेणं, चक्खुफासे अञ्जलिपग्गहेणं, मणसो एगत्तीभावकरणेणं" द्वितीया त्वष्टभिरङ्गैः शरीरावयवैरुपचारो यस्यां, तानि चामून्यङ्गानि-"सीसमुरोयरपिट्ठी दो बाहू उरुया य अट्ठंगा" तृतीया तु देवेन्द्रन्यायेन, यथोक्तमागमे-"सव्वबलेणं सव्वसमुदएणं सव्वविभूईए सव्वविभूसाए सव्वायरेणे"त्यादि ॥ ३ ॥ इयं च यादृशेन वित्तेन कार्या पुरुषेण च तदाह—

न्यायार्जितेन परिशोधितेन वित्तेन निरवशेषेण । कर्त्तव्या बुद्धिमता प्रयुक्तसत्सिद्धियोगेन ॥ ४ ॥

न्यायार्जितेन -न्यायोपात्तेन परिशोधितेन--भावविशेषाद् वित्तेन--द्रव्येण निरवशेषा-सकला इयं पूजा कर्त्तव्या-करणीया, बुद्धिमता--प्रज्ञावता 'प्रयुक्तसत्सिद्धियोगेन' प्रयुक्तः--चर्चितः सत्सिद्धियोगः--सत्साधनव्यापारो येन स तथा ॥४॥ कीदृक्प्रयत्नेन पुनः पुंसा करणीयेयमित्याह—

शुचिनाऽऽत्मसंयमपरं सितशुभवस्त्रेण वचनसारेण । आशंसारहितेन च तथा तथा भाववृद्ध्योच्चैः ॥५॥

शुचिना द्रव्यतः स्नातेन देशसर्व्वस्नानाभ्यां, देशस्नानं हस्तपादमुखप्रक्षालनं, सर्व्वस्नानं शिरसा स्नातत्वे सति, आगमप्रसिद्ध्या, भावात् शुचिना भावस्नानेन, विशुद्धाध्यवसायेनेत्यर्थः, 'आत्मसंयमपरं' आत्मनः--शरीरस्य संयमः--संवृताङ्गोपाङ्गेन्द्रियत्वं तत्परं-तत्प्रधानं यथा भवत्येवं पूजा कर्त्तव्या, सितशुभवस्त्रेण--सितवस्त्रेण च शुभवस्त्रेण च, शुभमिह सितादन्यदपि पट्टयुग्मादि रक्तपीतादिवर्णं परिगृह्यते, वचनसारेण--आगमप्रधानेन आशंसारहितेन च--इहपरलोकाद्याशंसाविकलेन च तथा तथा भाववृद्ध्योच्चैः--येन येन प्रकारेण पुष्पवस्त्रादिविरचनागतेन भाववृद्धिः संपद्यते तेन तेन प्रकारेणेत्यर्थः ॥ ५ ॥ प्रतिष्ठाऽनन्तरं पूजा प्रस्तुता, सा च पुष्पामिषस्तोत्रादिभेदेन बहुधा, तत्र पुष्पादिपूजामभिधाय स्तोत्रपूजां कारिकाद्वयेनाह—

पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसंयुक्तैः । आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः ॥ ६ ॥

पापनिवेदनगर्भैः प्रणिधानपुरस्सरैर्विचित्रार्थैः । अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥ ७ ॥

पिण्डं--शरीरमष्टोत्तरसहस्रलक्षणलक्षितं क्रिया--समाचारश्चरितं, तच्च सर्वातिशायि दुर्वारपरीषहोपसर्गसमुत्थभयविजयित्वेन

गुणाः-श्रद्धाज्ञानविरतिपरिणामादयो जीवस्य सहवर्त्तिनः अविनाभूताः सामान्येन, केवलज्ञानदर्शनादयस्तु विशेषेण, तद्गतैः—तद्विषयैस्तत्प्रतिबद्धैः गंभीरैः-सूक्ष्ममतिविषयभावाभिधायिभिरन्तर्भावप्रवर्त्तितैश्च विविधवर्णसंयुक्तैः-विचित्राक्षरसंयोगैः छन्दोऽलङ्कारवशेन, आशयविशुद्धिजनकैः-भावविशुद्ध्यापादकैः 'संवेगपरायणैः' संवेगः-संसारभयं मोक्षाभिलाषो वा परमयनं-गमनं येषु तानि परायणानि संवेगे परायणानि संवेगपरायणानि तैः, पुण्यहेतुत्वात्पुण्यानि तैः ॥ ६ ॥ पापानां-रागद्वेषमोहकृतानां स्वयंकृतत्वेन निवेदनं-परिकथनं तद्गर्भो-हृदयमन्तर्गतभावो येषां तानि तैः पापनिवेदनगर्भैः, प्रणिधानम्-एकाग्र्यं तत्पुरस्सरैरुपयोगप्रधानैरितियावत्, विचित्रार्थैः-बहुविधार्थैः, अस्खलितादिगुणयुतैः-अस्खलितममिलितमव्यत्याम्रेडितमित्यादिगुणयुक्तैः अभिव्याहारमाश्रित्य स्तोत्रैश्च-स्तुतिविशेषैश्च महामतिग्रथितैः-महाबुद्धिपुरुषविरचितसन्दर्भैः, इयं पूजा कर्त्तव्येति पश्चात् सम्बन्धनीयम् ॥ ७ ॥ कथं पुनः स्तोत्रेभ्यः पूजा भवतीत्याह—

शुभभावार्थं पूजा स्तोत्रेभ्यः स च परः शुभो भवति । सद्भूतगुणोत्कीर्त्तनसंवेगात् समरसापत्त्या ॥८॥

शुभभावार्थं पूजा-शुभभावनिमित्तं पूजा सर्व्वापि पुष्पादिभिः, स्तोत्रेभ्यः-स्तुतिभ्यः स च-भावः परः-प्रकृष्टः शुभो भवति-शुभहेतुर्जायते, एवं च पुष्पवस्त्रादीनामिव स्तोत्राणामपि श्राद्धकाध्यवसायापेक्षया शुभतरपरिणामनिबन्धनत्वेन पूजाहेतुत्वं सिद्ध्यति, कथं पुनः स्तोत्रेभ्यः शुभो भाव इत्याह-'सद्भूतगुणोत्कीर्त्तनसंवेगात्' सद्भूतानां-विद्यमानानां तथ्यानां च गुणानां-ज्ञानादीनां यत्कीर्त्तनं तेन संवेगो-मुक्त्यभिलाषस्तस्मात्, 'समरसापत्त्या'-समभावे रसः-अभिलाषो यस्यां सा समरसा सा चासाना-

पतिश्च-प्राप्तिरधिगतिरधिगम इत्यनर्थान्तरं तया हेतुभूतया समरसापत्त्या-परमात्मस्वरूपगुणज्ञानोपयोगरूपया, परमार्थतस्तद्भवनेन तदुपयोगानन्यवृत्तितया, स्तोत्रेभ्य एव शुभो भावो भवतीति तात्पर्य्यम् ॥ ८ ॥ अधुना अन्यथा पूजाया एव भेदत्रयमाह—

कायादियोगसारा त्रिविधा तच्छुद्ध्युपात्तवित्तेन । या तदतिचाररहिता सा परमाऽन्ये तु समयविदः॥९॥

कायादयो योगाः कायादीनां वा तत्सारा–तत्प्रधाना त्रिविधा–त्रिप्रकारा पूजा, काययोगसारा वाग्योगसारा मनोयोगसारा च, 'तच्छुद्ध्युपात्तवित्तेन' तेषां–कायादियोगानां शुद्धिः–कायादिदोषपरिहारस्तयोपात्तं यद्वित्तं तेन करणभूतेन, या तदतिचाररहिता–शुद्ध्यतिचारविकला सा परमा–प्रधाना पूजा अन्ये तु समयविदः–अपरे त्वाचार्याः इत्थमभिदधति ॥ ९ ॥ 'कायादियोगसारा त्रिविधा पूजे'त्युक्तं, तदेव त्रैविध्यमाह—

विघ्नोपशमन्याद्या गीताऽभ्युदयप्रसाधनी चान्या। निर्वाणसाधनीति च फलदा तु यथार्थसंज्ञाभिः॥१०॥

विघ्नानुपशमयतीति विघ्नोपशमनी आद्या–काययोगसारा गीता–कथिता, अभ्युदयं प्रसाधयतीत्यभ्युदयप्रसाधनी च अन्या–अपरा वाग्योगप्रधाना, निर्वाणं साधयतीति निर्वाणसाधनीति च मनोयोगसारा, स्वतन्त्रा वा त्रिविधा, फलदा तु–फलदैवैषा यथार्थसंज्ञाभिः—अन्वर्थाभिधानैः[1] ॥ १० ॥ तिसृष्वपि यत्नवति तदाह—

1 पूजायाः समन्तभद्रा सर्वमङ्गला सर्वसिद्धिफलेत्येतान्यप्यन्वर्थनामानि गीयन्ते । तत्रेह प्रथमा प्रथमावञ्चकयोगात्सम्यग्दृष्टेर्भवति, द्वितीया [redacted] द्विती-यावञ्चकयोगादुत्तरगुणधारिणः, तृतीया च तृतीयावञ्चकयोगात्परमश्रावकस्यैव, प्रथमकरणभेदेन ग्रन्थ्यासन्नस्य च धर्ममात्रफलैषैवं सद्योगादिभावादनुबन्धा-सिद्धेरित्ययं पूजाविंशिकायां विशेषः

प्रवरं पुष्पादि सदा चाद्यायां सेवते तु तद्दाता । आनयति चान्यतोऽपि हि नियमादेव द्वितीयायाम्॥११

त्रैलोक्यसुन्दरं यत् मनसाऽऽपादयति तत्तु चरमायाम् । अखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपरः॥१२॥

प्रवरं–प्रधानं पुष्पादि–पुष्पगन्धमाल्यादि सदा च–सर्वदैवाद्यायां–प्रथमायां 'सेवते तु' सेवत एव ददात्येव तद्दाता-तस्याः–पूजायाः कर्त्ता-दाता, आनयति च वचनेनान्यतोऽपि हि–क्षेत्रान्तरात् प्रस्तुतं पुष्पादि नियमादेव–नियमेनैव द्वितीयायां पूजायां ॥११॥ त्रैलोक्यसुन्दरं–त्रिषु लोकेषु प्रधानं यत्–पारिजातकुसुमादि नन्दनादिवनगतं मनसा–अन्तःकरणेनापादयति-सम्पादयति तत्तु–तदेव चरमायां–निर्वाणसाधन्यां, तद्दातेत्यत्राप्यभिसम्बध्यते, अयमेव विशिष्यते–अखिलैर्गुणैरधिकं सद्योगानां-सद्धर्म्मव्यापाराणां सारं–फलकल्पमजरामरत्वेन, धर्म्मस्य सारोऽमरत्वमिति तत्त्वं, सद्योगसारं यत् सद्ब्रह्म–परमात्मस्वरूपं तस्य यागो–यजनं पूजनं तत्परः–तत्प्रधानः, प्रस्तुतस्तद्दाताऽखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपर उच्यते ॥ १२ ॥ प्रतिष्ठानन्तरं स्नानादि चिकीर्षितं, तत्र जीवकायवधमाशङ्क्याह—

स्नानादौ कायवधो न चोपकारो जिनस्य कश्चिदपि। कृतकृत्यश्च स भगवान् व्यर्था पूजेति मुग्धमतिः॥१३

स्नानादौ–स्नानविलेपनसुगन्धिपुष्पादौ पूर्वोक्ते कायवधो–जलवनस्पत्यादिवधः परिदृष्टरूप एव, न चोपकारः–सुखानुभ-

---

१ अखिलगुणाधिकस्य हि पूजाऽखिलगुणाधिकं पूजोपकरणं मनसि निधायातिशयितपरितोषाद् बुद्धिमता विधेयेत्यर्थः

रूपस्तदनुभोगेन जिनस्य-वीतरागस्य मुक्तिव्यवस्थितस्य कश्चिदपि--कोऽपि, कृतकृत्यश्च-निष्ठितार्थश्च स भगवान्--नकिञ्चित् तस्य करणीयमस्त्यपरैः, एवं व्यर्था पूजा-निरर्थिका पूजेत्येवं मुग्धमतिः- अव्युत्पन्नमतिर्मूढमतिर्वा ,पर्यनुयुङ्क्ते ॥ १३ ॥ पूजा-व्यर्थत्वपरिहाराय कारिकाद्वयमाह—

कूपोदाहरणादिह कायवधोऽपि गुणवान् मतो गृहिणः। मन्त्रादेरिव च ततस्तदनुपकारेऽपि फलभावः॥१४

कृतकृत्यत्वादेव च तत्पूजा फलवती गुणोत्कर्षात्। तस्मादव्यर्थैषाऽऽरम्भवतोऽन्यत्र विमलधियः ॥१५॥

कूपोदाहरणात् समयप्रसिद्धादिह-पूजाप्रस्तावे कायवधोऽपि-जलवनस्पत्याद्युपरोधोऽपि गुणवान्--सगुणो मतः--अभिप्रेतो गृहिणो-गृहस्थस्य[1], एतावता वचनेन कायवधदोषः परिहृतः, मन्त्रादेरिव च--मन्त्राग्निविद्यादेरिव च ततः-तस्याः पूजायाः सकाशात् यथा तदनुपकारेऽपि—स्मर्यमाणमन्त्रसेव्यमानज्वलनाभ्यस्यमानविद्यादेरनुपकारेऽपि स्मर्यमाणमन्त्रादीनां स्वगतोपकाराभावात् फलभावः-फलसद्भावो, यथा विपच्छीतापहारविद्यासिद्ध्यादिरूपो मन्त्रादेस्तथा जिनपूजनतो जिनानामनुपकारेऽपि पूजकस्य विशिष्टपुण्यलाभरूपः फलभावः, अनेनापि न चोपकारो जिनस्येति दोषः परिहृतः ॥१४॥ कृतकृत्यत्वादेव च--सर्वसिद्धार्थत्वादेव च तत्पूजा-देवपूजा फलवती-सफला गुणोत्कर्षात्-कृतकृत्यस्योत्कृष्टगुणत्वाद्, अनेन पूजाया अभावे यत्कृतकृत्यत्वं हेतुत्वेनोपन्यस्तं तत्परिहृतमवगन्तव्यम्, तस्मादिति निगमनम् अव्यर्थैषा-सप्रयोजना पूजा आरम्भवतोऽन्यत्र विमलधियः-विमलबुद्धेः

1 गृहस्थस्याल्पत्वेन बह्वायभावात्

पुरस्तान्यत्र शरीरस्वजननिकेतनादारम्भवतः-आरम्भप्रवृत्तस्य ॥१५॥ एवं सचोद्यपरिहारां पूजामभिधाय फलद्वारेण निगमयन्नाह—

इति जिनपूजां धन्यः शृण्वन् कुर्वंस्तदोचितां नियमात् । भवविरहकारणं खलु सदनुष्ठानं द्रुतं लभते ॥१६॥

इति एवमुक्तनीत्या जिनपूजां-देवपूजां धन्यः-पुण्यभाक् शृण्वन्नर्थतः कुर्व्वन् क्रियया तदा-तस्मिन्काले उचितां-योग्यां नियमात्-नियमेन भवविरहकारणं खलु-भवविगमनिमित्तमेव सदनुष्ठानं-शोभनानुष्ठानं द्रुतं-आश्वेव लभते-अवाप्नोतीति ॥ १६ ॥ इति नवमं षोडशकम् ॥

## ॥ अथ दशमं षोडशकम् ॥

'सदनुष्ठानं लभत' इत्युक्तं, तदाह—

सदनुष्ठानमतः खलु बीजन्यासात् प्रशान्तवाहितया सञ्जायते नियोगात् पुंसां पुण्योदयसहायम् ॥ १ ॥

सदनुष्ठानं प्रागुक्तमतः खलु बीजन्यासाद्-अस्मात्पुण्यानुबन्धिपुण्यनिक्षेपात् प्रशान्तवाहितया-प्रशान्तं वोढुं शीलं यस्य तत्प्रशान्तवाहि तद्भावस्तत्ता तया चित्तसंस्काररूपया सञ्जायते-निष्पद्यते नियोगात्-नियमेन पुंसां-मनुष्याणां पुण्योदयसहायं-पुण्यानुभावसहितम् ॥ १ ॥ तदेव भेदद्वारेणाह—

तत्प्रीतिभक्तिवचनासङ्गोपपदं चतुर्विधं गतिम् । तत्त्वाभिज्ञैः परमपदसाधनं सर्वमेवैतत् ॥ २ ॥

तत्-सदनुष्ठानं प्रीतिश्च भक्तिश्च वचनं चासङ्गश्चैते शब्दा उपपदम्-उपोच्चारितपदं यस्य सदनुष्ठानस्य तत्तथा चतुर्विधं-चातुर्भेदं

गीतं-शब्दितं, प्रीत्यनुष्ठानं भक्त्यनुष्ठानं वचनानुष्ठानमसङ्गानुष्ठानं, तत्त्वाभिज्ञैः-स्वरूपाभिज्ञैः परमपदसाधनं-मोक्षसाधनं सर्व्वमेवैतच्चतुर्विधम् ॥ २ ॥ तत्राद्यरूपमाह—

यत्रादरोऽस्ति परमः प्रीतिश्च हितोदया भवति कर्त्तुः । शेपत्यागेन करोति यच्च तत् प्रीत्यनुष्ठानम् ॥३॥

यत्रानुष्ठाने आदरः-प्रयत्नातिशयोऽस्ति परमः प्रीतिश्च-अभिरुचिरूपा हितोदया-हित उदयो यस्याः सा तथा भवति कर्तुः-अनुष्ठातुः शेपत्यागेन-शेषप्रयोजनत्यागेन तत्काले करोति यच्चातीव धर्म्मादरात् तदेवंभूतं प्रीत्यनुष्ठानं विज्ञेयम् ॥ ३ ॥ द्वितीयस्वरूपमाह—

गौरवविशेपयोगाद्बुद्धिमतो यद्विशुद्धतरयोगम् । क्रिययेतरतुल्यमपि ज्ञेयं तद्भक्त्यनुष्ठानम् ॥ ४ ॥

'गौरवविशेपयोगात्' गौरवं-गुरुत्वं पूजनीयत्वम् तद्विशेपयोगात्-तदधिकसम्बन्धात् बुद्धिमतः पुंसो यदनुष्ठानं विशुद्धतरयोगं-विशुद्धतरव्यापारं क्रियया-करणेन इतरतुल्यमपि-प्रीत्यनुष्ठानतुल्यमपि ज्ञेयं तदेवंविधं भक्त्यनुष्ठानम् ॥ ४ ॥ आह-कः पुनः प्रीतिभक्त्योर्विशेषः?, उच्यते—

अत्यन्तवल्लभा खलु पत्नी तद्वद्धिता च जननीति । तुल्यमपि कृत्यमनयोर्ज्ञातं स्यात् प्रीतिभक्तिगतम्॥५॥

अत्यन्तवल्लभा खलु-अत्यन्तवल्लभैव पत्नी-भार्या तद्वत्-पत्नीवदत्यन्तेष्टैव हिता च-हितकारिणीतिकृत्वा जननी प्रसिद्धा तुल्यमपि-सदृशमपि कृत्यं-भोजनाच्छादनादि अनयोः-जननीपत्न्योर्ज्ञातम्-उदाहरणं स्यात् प्रीतिभक्तिगतं-प्रीति-

भक्तिविषयं, इदमुक्तं भवति—प्रीत्या पत्न्याः क्रियते, भक्त्या मातुरितीयान् प्रीतिभक्त्योर्विशेषः ॥ ५ ॥ तृतीयस्वरूपमाह—

**वचनात्मिका प्रवृत्तिः सर्वत्रौचित्ययोगतो या तु । वचनानुष्ठानमिदं चारित्रवतो नियोगेन ॥ ६ ॥**

वचनात्मिका-आगमात्मिका प्रवृत्तिः-क्रियारूपा सर्वत्र-सर्वस्मिन् धर्मव्यापारे क्षान्तिप्रत्युपेक्षादौ औचित्ययोगतो या तु-देशकालपुरुषव्यवहाराद्यौचित्येन वचनानुष्ठानमिदमेवं प्रवृत्तिरूपं चारित्रवतः-साधोर्नियोगेन-नियमेन, नान्यस्य भवति[2] ॥ ६ ॥ तुर्यस्वरूपमाह—

**यत्त्वभ्यासातिशयात् सात्मीभूतमेव चेष्ट्यते सद्भिः । तदसङ्गानुष्ठानं भवति त्वेतत्तदावेधात् ॥ ७ ॥**

यत्पुनरभ्यासातिशयाद्-अभ्यासप्रकर्षाद्भूयोभूयस्तदासेवनेन सात्मीभूतमिव-आत्मसाद्भूतमिव चन्दनगन्धन्यायेन चेष्ट्यते-क्रियते सद्भिः-सत्पुरुषैर्जिनकल्पिकादिभिः, तदेवंविधमसङ्गानुष्ठानं, भवति त्वेतत् जायते पुनः एतत् तदावेधाद्-वचनावेधादागमसंस्कारात् ॥ ७ ॥ वचनासङ्गानुष्ठानयोर्विशेषमाह—

**चक्रभ्रमणं दण्डात् तदभावे चैव यत् परं भवति । वचनासङ्गानुष्ठानयोस्तु तद् ज्ञापकं ज्ञेयम् ॥ ८ ॥**

चक्रभ्रमणं--कुम्भकारचक्रपरावर्त्तनं दण्डाद्-दण्डसंयोगात् तदभावे चैव यत्परं-अन्यद्भवति, वचनासङ्गानुष्ठानयोस्तु-

1 प्रीतिश्च भक्तिश्चेति क्रियागुणमानोरथिकद्वयंगतौ जातिविशेषाविति सर्वानुसारिण. 2 तस्यैव भवदुर्गलङ्घन षष्ठगुणस्थानायासेः, तत्र च लोकसंज्ञाऽभावात्, नान्यस्य विपर्ययात्, निश्चयनयमतमेतद्, व्यवहारतस्त्वन्यस्यापि मार्गानुसारिणो वचने प्रवर्त्तमानस्य देशत इद भवत्येवेति द्रष्टव्यम्.

प्रस्तुतयोस्तु ज्ञापकम्-उदाहरणं ज्ञेयं, यथा चक्रभ्रमणमेकं दण्डसंयोगाज्जायते प्रयत्नपूर्वकं एवं वचनानुष्ठानमप्यागमसंयोगात् प्रवर्त्तते, यथा चान्यचक्रभ्रमणं दण्डसंयोगाभावे केवलादेव संस्कारापरिक्षयात् संभवति एवमागमसंस्कारमात्रेण वस्तुतो वचननिरपेक्षमेव स्वाभाविकत्वेन यत्प्रवर्त्तते तदसङ्गानुष्ठानमितीयान् भेद इति भावः ॥ ८ ॥ एषामेव चतुर्णामनुष्ठानानां फलविभागमाह—

**अभ्युदयफले चाद्ये निःश्रेयससाधने तथा चरमे । एतदनुष्ठानानां विज्ञेये इह गतापाये ॥ ९ ॥**

अभ्युदयफले च–अभ्युदयनिर्वर्त्तके च आद्ये-प्रीतिभक्त्यनुष्ठाने, निःश्रेयससाधने–मोक्षसाधने तथा चरमे–वचनासङ्गानुष्ठाने, एतेषामनुष्ठानानां मध्ये विज्ञेये इह—प्रक्रमे गतापाये—अपायरहिते निरपाये[1] ॥ ९ ॥ एतेष्वेव चतुर्ष्वनुष्ठानेषु पञ्चविधक्षान्तियोजनामाह—

**उपकार्यपकारिविपाकवचनधर्मोत्तरा मता क्षान्तिः । आद्यद्वये त्रिभेदा चरमद्वितये द्विभेदेति ॥ १० ॥**

उपकारी–उपकारवान् अपकारी तु–अपकारप्रवृत्तः विपाकः–कर्म्मफलानुभवनमनर्थपरम्परा वा वचनम्–आगमः धर्म्मः-प्रशमादिरूपस्तदुत्तरा–तत्प्रधाना मता–सम्मता पञ्चविधा क्षान्तिः–क्षमा, आद्यद्वये–आद्यानुष्ठानद्वये त्रिभेदा–त्रिप्रकारा, चरमद्वितये–चरमानुष्ठानद्वितये द्विभेदेति–द्विधा । तत्रोपकारिणि क्षान्तिरुपकारिक्षान्तिः तदुक्तं दुर्व्वचनाद्यपि सहमानस्य तथा अपकारिणि क्षान्तिरपकारिक्षान्तिः मम दुर्व्वचनाद्यसहमानस्यायमपकारी भविष्यतीत्यभिप्रायेण क्षमां कुर्वतः तथा विपाके क्षान्तिः

1 अत एव पूर्वद्वयम् स्वर्गहेतुरपूर्वद्वयमथ मोक्षहेतुरिति सिद्धान्तनय ॥ ९ ॥

विपाकक्षान्तिः, कर्म्मफलविपाकं नरकादिगतमनुपश्यतो दुःखभीरुतया मनुष्यभव एव वाऽनर्थपरम्परामालोचयतो विपाकदर्शनपुरस्सरा भवति ३ तथा वचनक्षान्तिः आगममेवालम्बनीकृत्य या प्रवर्त्तते, न पुनरुपकारित्वापकारित्वविपाकाख्यमालम्बनत्रयं, सा वचनपूर्वकत्वादन्यनिरपेक्षत्वात्तथोच्यते ४ धर्म्मोत्तरा तु क्षान्तिश्चन्दनस्येव शरीरस्य छेददाहादिषु सौरभादिस्वधर्म्मकल्पा परोपकारकारिणी न विक्रियते सहजत्वेनावस्थिता सा तथोच्यते ॥ १० ॥ इदानीं धर्म्मोत्तराविरहितासु चतसृषु क्षान्तिषु सूक्ष्मेतरातिचारसम्भवप्रदर्शनायाह—

चरमाद्यायां सूक्ष्मा अतिचाराः प्रायशोऽतिविरलाश्च । आद्यत्रये त्वमी स्युः स्थूलाश्च तथा घनाश्चैव ।११।

चरमाया आद्या वचनक्षान्तिस्तस्यां चरमाद्यायां सूक्ष्मा-लघवोऽतिचारा-अपराधाः प्रायशः कदाचित्कत्वेनातिविरलाश्च सन्तानाभावेन, आद्यत्रये त्वमी स्युः-भवेयुः स्थूलाश्च-बादराश्च तथा घनाश्चैव-निरन्तराश्चैव ॥ ११ ॥ 'वचनानुष्ठानं चारित्रवतो नियोगेने'त्युक्तं, तत्र ज्ञानयोजनामाह—

श्रुतमयमात्रापोहाच्चिन्तामयभावनामये भवतः । ज्ञाने परे यथार्हं गुरुभक्तिविधानसङ्क्षिप्ते ॥ १२ ॥

उदकपयोऽमृतकल्पं पुंसां सज्ज्ञानमेवमाख्यातम् । विधियत्नवत्तु गुरुभिर्विपयतृडपहारि नियमेन ॥१३॥

श्रुतेन निर्वृत्तं श्रुतमयं तदेव तन्मात्रं अवधृतस्वरूपमन्यज्ञानद्वयनिरपेक्षं तदपोहात्-तन्निरासाद्, अन्यज्ञानद्वयसापेक्षं तु श्रुतमयं न निरस्यत इति ज्ञेयं, चिन्तामयभावनामये वक्ष्यमाणरूपे, नयप्रमाणसूक्ष्मयुक्तिचिन्तानिर्वृत्तं चिन्तामयं, हेतुस्वरूपफल-

भेदेन कालत्रयविषयं भावनामयं ते भवतो-जायेते ज्ञाने परे-प्रधाने यथार्हम्-औचित्येन गुरुभक्तिविधानं सत्-शोभनं लिङ्गं ययोर्गुरुभक्तिविधानमङ्कितं ॥ १२ ॥ ज्ञानत्रयं सफलं दृष्टान्तद्वारेण प्रतिपिपादयिषुराह—उदकपयोऽमृतकल्पं-उदकरसास्वादकल्पं पयोरसास्वादकल्पम् अमृतरसास्वादकल्पं पुंसां-विद्वत्पुरुषाणां सज्ज्ञानं-सम्यग्ज्ञानमेवमाख्यातं स्वरूपतो विधियत्नवत्तु-विधां यत्नः स विद्यते यस्मिंस्तद्विधियत्नवदेव, न विधियत्नशून्यं, गुरुभिः-आचार्यैराख्यातं विषयतृडपहारि-विषयतृषमपहर्तुं शीलमस्येति निगमेन-अन्वयंतया, श्रुतज्ञानं स्वच्छस्वादुपथ्यसलिलास्वादतुल्यं, चिन्ताज्ञानं तु क्षीररसास्वादतुल्यं, भावनाज्ञानममृतरसास्वादतुल्यमित्युक्तं भवति ॥ १३ ॥ 'विषयतृडपहारी'त्युक्तं, यस्य तु विषयाभिलाषातिरेकः स ज्ञानत्रयवानेव फलाभावान्न भवतीत्ययोग्यत्वमतिपादनाय तस्येदमाह—

शृण्वन्नपि सिद्धान्तं विषयपिपासातिरेकतः पापः । प्राप्नोति न संवेगं तदाऽपि यः सोऽचिकित्स्य इति १४

नैवंविधस्य शस्तं मण्डल्युपवेशनप्रदानमपि । कुर्वन्नेतद् गुरुरपि तदधिकदोषोऽवगन्तव्यः ॥ १५ ॥

यः शृण्वन् संवेगं गच्छति तस्याद्यमिह मतं ज्ञानम् । गुरुभक्त्यादिविधानात् कारणमेतद् द्वयस्येष्टम्॥१६॥

शृण्वन्नपि-तीर्थकराभिहितमर्थतः सिद्धान्तं-प्रतिष्ठितपक्षरूपं गणधराद्युपनिबद्धमागमं विषयपिपासातिरेकतो-रूपरसगन्धस्पर्शशब्दाभिलाषातिरेकेण पापः सङ्क्लिष्टाध्यवसायत्वात् न प्राप्नोति संवेगं-मोक्षाभिलाषं तदापि-सिद्धान्तश्रवणकालेऽपि, आस्तां तदन्यदा, य एवंविधः सोऽचिकित्स्य-इत्यचिकित्सनीयः स वर्तते, शास्त्रविहितदोषचिकित्साया अनर्हत्वादिति ॥ १४ ॥

इत्थं कर्म्मदोषवतः किं कर्त्तव्यमित्याह—न प्रतिषेधे एवंविधस्य पुरुषस्य शस्तं-प्रशस्तमनुज्ञातमित्यर्थः, मण्डल्युपवेशनप्रदानमपि-अर्धमण्डल्यां यदुपवेशनं श्रवणार्थं तत्प्रदानमपि, कुर्वन्-सम्पादयन् एतत्पूर्व्वोक्तं गुरुरपि-प्रस्तुतोऽर्थाभिधायी तदधिकदोषः-अयोग्यपुरुषाधिकदोषोऽवगन्तव्यः-अवबोद्धव्यः, सिद्धान्तावज्ञाऽऽपादनादिति ॥१८॥ पूर्व्वोक्तार्थं व्यतिरेकेणाह—यः कश्चिद्योग्यः शृण्वन्--सिद्धान्तमिति सम्बध्यते, संवेगं गच्छति-आस्कन्दति तस्य--योग्यस्याद्यमिह-प्रथममिह मतं ज्ञानं-श्रुतज्ञानं, गुरुभगवदादिविधानाद्—गुरुभक्तिविनयबहुमानादिकरणात् कारणमेतद् द्वयस्येष्टं-चिन्तामयभावनामयज्ञानद्वयस्य हेतुरेव श्रुतज्ञानमिदं, तस्माज्ज्ञानत्रयेऽपि रत्नत्रयकल्पे परमादरो विधेय इति ॥ १६ ॥ १० ॥ इति दशमं षोडशकम् ॥

## ॥ अथ एकादशं षोडशकम् ॥

किं पुनः श्रुतज्ञानस्य प्राक् संभवि लिङ्गमित्याह—

शुश्रूषा चेहाद्यं लिङ्गं खलु वर्णयन्ति विद्वांसः । तदभावेऽपि श्रावणमसिराऽवनिकूपखननसमम् ॥ १ ॥

श्रोतुमिच्छा च शुश्रूषा चेहाद्यं लिङ्गं-श्रुतज्ञाने प्रथमं लक्षणं, खलुशब्दो वाक्यालङ्कारे, वर्णयन्ति विद्वांसो--विचक्षणाः, तदभावेऽपि-शुश्रूषाया अभावेऽपि श्रावणं-श्रवणे प्रयोजनं कर्त्तव्यं गुरोः शिष्यविषयमिति गम्यते, असिराऽवनिकूपखननसमं असिरायामवनौ कूपखननमखननमेव अनुदकप्राप्तिफलत्वात् तेन समं, विवक्षितफलरहितमित्यर्थः, बोधप्रवाहो हि श्रावणस्य फलं

१ कि गुरुरोगादीनविधास्यार्थः २ भ्रममूलभ्रमसमाप्तफलतमुक्तं भवति

उदकप्राप्तिरिव कूपखननस्य, स च शुश्रूषासिराऽभावे न संभवतीति तेन सममित्युक्तं इतिहृदयम् ॥ १ ॥ 'शुश्रूषा चेहाद्यं लिङ्ग'-मित्युक्तं, तामेव विभजयन्नाह—

शुश्रूषाऽपि द्विविधा परमेतरभेदतो बुधैरुक्ता । परमा क्षयोपशमतः परमाच्छ्रवणादिसिद्धिफला ॥ २ ॥
यूनो वैदग्ध्यवतः कान्तायुक्तस्य कामिनोऽपि दृढम् । किन्नरगेयश्रवणादधिको धर्मश्रुतौ रागः ॥ ३ ॥
गुरुभक्तिः परमाऽस्यां विधौ प्रयत्नस्तथाऽऽहतिः करणे । सद्ग्रन्थाप्तिः श्रवणं तत्त्वाभिनिवेशपरमफलम् ४
विपरीता त्वितरा स्यात् प्रायोऽनर्थाय देहिनां सा तु । या सुतनृपकथानकशुश्रूषावत् स्थिता लोके॥५॥

शुश्रूषाऽपि प्रागुक्ता द्विविधा–द्विप्रकारा परमेतरभेदतः–प्रकृष्टेतरभेदेन बुधैः-विद्वद्भिरुक्ता–प्रतिपादिता, परमा–प्रधाना क्षयोपशमतः–क्षयोपशमात् परमात्-प्रधानाद्भवति, सा च श्रवणादिसिद्धिफला–श्रवणग्रहणधारणादिसिद्धिः फलमस्या इति॥२॥ परमायाः शुश्रूषायाः फलमुपदर्शयति–यूनो–वयःस्थस्य वैदग्ध्यवतो–वैचक्षण्यवतः सर्वकलाकुशलस्य कान्तायुक्तस्य–कमनीय-प्रियतमासमन्वितस्य कामिनोऽपि–अनुरक्तस्यापि[1] दृढं-अत्यर्थं किन्नरगेयश्रवणाद्–दिव्यगीतश्रवणात् कर्णामृतकल्पादधिको-विशेषवान् धर्म्मश्रुतौ—धर्म्मश्रवणे रागः-अभिलाषः, एवं श्रवणादिसिद्धिफला परमा शुश्रूषा भवति ॥ ३ ॥ अस्यामेव सत्यां यद्भवति तदाह—गुरुविषया भक्तिः परमा–प्रधाना अस्यां गुरुशुश्रूषायां सत्यां विधौ–विधिविषये क्षेत्रशुद्ध्यादौ प्रयत्नः-परमादरः

१ शुश्रूषेच्छात्मिका रागस्तु मनःप्रसादनात्मक इति हेतुफलयोर्भेदः.

तथाऽऽहतिः करणे-आगमार्थक्रियायां सद्ग्रन्थाप्तिः सती—शोभना ग्रन्थाप्तिः-परिस्फुटसूत्रार्थावाप्तिः, श्रवणमर्थस्य, तत्त्वाभिनिवेशपरमफलम्-तत्त्वज्ञानपरमफलम् ॥ ४ ॥ अपरशुश्रूषामुपदर्शयति-विपरीता तु-उक्तविपरीता इतरा-अपरमा शुश्रूषा स्यात्, प्रायो-बाहुल्येन अनर्थाय-अनुपकाराय देहिनां-शरीरिणां सा तु-सा पुनरितरशुश्रूषा, या कीदृशी ?-सुप्तश्चासौ नृपश्च शय्याव्यवस्थितो लीलया स्वापार्थं किञ्चित्किञ्चित् शृणोति कथानके-क्वचिदाख्यायिकायां शुश्रूषा—श्रवणेन्द्रियव्यापृतिस्तद्वत् सुप्तनृपकथानकशुश्रूषावत् स्थिता-प्रतिष्ठिता प्रसिद्धा लोके सर्व्वत्रैव, यथा नृपस्य कथानकश्रवणे न महानादरः अथ किञ्चिच्छृणोत्येवमयमप्यपरमशुश्रूषायामादरमन्तरेण किञ्चिच्छृणोति ॥ ५ ॥ इदानीं त्रयाणां श्रुतादिज्ञानानां किञ्चिद्विभागमुपदर्शयति—

ऊहादिरहितमाद्यं तद्युक्तं मध्यमं भवेज्ज्ञानम् । चरमं हितकरणफलं विपर्ययो मोहतोऽन्य इति ॥६॥

वाक्यार्थमात्रविषयं कोष्ठकगतबीजसन्निभं ज्ञानम् । श्रुतमयमिह विज्ञेयं मिथ्याऽभिनिवेशरहितमलम्॥७॥

यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम् । उदक इव तैलबिन्दुर्विसर्पि चिन्तामयं तत्स्यात् ८

ऐदम्पर्य्यगतं यद्विध्यादौ यत्नवत्तथैवोच्चैः । एतत्तु भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥ ९ ॥

ऊहो-वितर्कः ऊहापोहविज्ञानादिरहितमाद्यं-प्रथमं श्रुतमयं, तद्युक्तं-ऊहादियुक्तं मध्यमं-चिन्तामयं भवेत् ज्ञानं-द्वितीयं, चरमं-भावनामयं तृतीयं हितकरणफलं-हितकरणं फलमस्येति स्वहितनिर्वर्त्तनफलं, विपर्ययो-विपर्य्यासो मिथ्याज्ञानं मोहतो-मोहात् मिथ्यात्वमोहनीयोदयात् ज्ञानत्रयादन्योऽबोध इति ॥ ६ ॥ श्रुतमयज्ञानस्य लक्षणमाह—सकलशास्त्रगतवचनाविरोधिनिर्णी-

तार्थवचनं वाक्यं तस्यार्थमात्रं-प्रमाणनयाधिगमरहितं तद्विषयं-तद्गोचरं वाक्यार्थमात्रविषयं, न तु परस्परविभिन्नविषयशास्त्रावयवभूतपदमात्रवाच्यार्थविषयं, कोष्ठके-लोहकोष्ठकादौ गतं—स्थितं यद् बीजं—धान्यं तत्सन्निभमविनष्टत्वात् कोष्ठकगतबीजसन्निभं ज्ञानं श्रुतमयमिह-प्रक्रमे विज्ञेयं-वेदितव्यं मिथ्याभिनिवेशः-असदभिनिवेशस्तेन रहितं-विप्रमुक्तं अलं--अत्यर्थम्[2] ॥ ७ ॥ चिन्तामयज्ञानस्य लक्षणमाह—यत्तु—यत्पुनर्महावाक्यार्थजं-आक्षिप्तेतरसर्वधर्मात्मकत्ववस्तुप्रतिपादकानेकान्तवादविषयार्थजन्यं अतिसूक्ष्मा—अतिशयसूक्ष्मबुद्धिगम्याः शोभना-अविसंवादिन्यो या युक्तयः--सर्वप्रमाणनयगर्भास्तच्चिन्तया-तदालोचनयोपेतं--युक्तम् उदक इव-सलिल इव तैलबिन्दुः-तैललवो विसर्पणशीलं विसर्पि-विस्तारयुक्तं चिन्तया निर्वृत्तं चिन्तामयं तज्ज्ञानं स्याद्-भवेत् ॥ ८ ॥ भावनाज्ञानलक्षणमाह—ऐदम्पर्यं-तात्पर्यं सर्वज्ञेयक्रियाविषये सर्वज्ञाज्ञैव प्रधानं कारणमित्येवंरूपं तद्गतं-तद्विषयं यज्ज्ञानं विध्यादौ-विधिद्रव्यदातृपात्रादौ यत्नवत्-परमादरयुक्तं तथैवोच्चैः-ऐदम्पर्यवत्त्वापेक्षया यतयत्त्वस्य समुच्चयार्थं तथैवेत्यस्य ग्रहणं, एतत्तु-एतत्पुनर्भावनया निर्वृत्तं भावनामयं-ज्ञानं अशुद्धस्य सद्रत्नस्य-जात्यरत्नस्य स्वभावत एव क्षारमृत्पुटपाकाद्यभावेऽपि भास्वररूपस्य या दीप्तिस्तया समं अशुद्धसद्रत्नदीप्तिसमम्, यथा हि जात्यरत्नस्य स्वभावत एवान्यरत्नेभ्योऽधिका दीप्तिर्भवति एवमिदमपि भावनाज्ञानमशुद्धसद्रत्नकल्पस्य भव्यजीवस्य कर्ममलमलिनस्यापि शेषज्ञानेभ्योऽधिक-

---

1 वाक्यार्थः प्रकृतवाक्यैकवाक्यतापन्नसकलशास्त्ररचनार्थाविरोधिवचनार्थः तन्मात्रं प्रमाणनयाधिगमरहितं तद्विषयं-तद्गोचरं, नतु परस्परविभिन्नविषयताशास्त्रावयवभूतपदमात्रवाच्यार्थविषयं 2 तस्य संशयादिरूपत्वेनाज्ञानत्वात् 3 पदार्थज्ञानोत्थापितानुपपत्तिनिरासप्रधानत्वात्

प्रशमकारि भवति, अनेन हि ज्ञानं ज्ञातं नाम, क्रियाप्येतत्पूर्विकैव मोक्षायाऽऽक्षेपेण सम्पद्यत इति' ॥ ९ ॥ साम्प्रतं त्रयाणां श्रुतचिन्ताभावनामयज्ञानानां विषयविभागार्थं फलाभिधानाय प्रक्रमते कारिकाद्वयेन—

आद्य इह मनाक्पुंसस्तद्रागाद्दर्शनग्रहो भवति । न भवत्यसौ द्वितीये चिन्तायोगात् कदाचिदपि ॥१०॥
चारिचरकसञ्जीन्यचरकचारणविधानतश्चरमे । सर्वत्र हिता वृत्तिर्गाम्भीर्यात्समरसापत्त्या ॥ ११ ॥

आद्ये–श्रुतज्ञाने इह–प्रवचने मनाग्–ईषत् पुंसः–पुरुषस्य तद्रागात्–श्रुतमयज्ञानानुरागात् 'दर्शनग्रहो भवति' दर्शनं मतं श्रुतमित्येकोऽर्थस्तद्ग्रहः तदाग्रहो, यथेदमस्मोक्तमिदमेव च प्रमाणं नान्यदित्येवंरूपो, न भवत्यसौ–दर्शनग्रहो यथेदमस्मदीयं दर्शनं शोभनमन्यदीयमशोभनमित्येवंरूपो द्वितीये चिन्तायोगाद्–अतिसूक्ष्मसुयुक्तिचिन्तनसम्बन्धात् कदाचिदपि काले, नयप्रमाणाधिगमसमन्वितो हि विद्वान् प्रेक्षावत्तया स्वपरतन्त्रोक्तं न्यायबलायातमर्थं सर्वं प्रतिपद्यते, तेनास्य दर्शनग्रहो न भवति ॥१०॥
चारिचरको–भक्षयिता सञ्जीवन्या–औषधेः अचरकः–अनुपभोक्ता तस्य चारणं–अभ्यवहारणं तस्य विधानं—सम्पादनं तस्माद्धा-

---

1 अथ चैतस्मादपि वाक्याद् व्युत्पत्तिविशेषेण जायमानानां वाक्यार्थज्ञानादीनां महावाक्यार्थसम्यग्ज्ञानावाक्यान्तरव्यापारत्वमिति न विरम्यव्यापारानुपपत्तिदोषः, यथा चाहुस्तार्किकाः "सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारो, यत्परः स शब्दार्थः" इत्यन्यत्र विस्तरः 2 दर्शनग्रहः–असत्यपक्षपातो भवति, यथेदं मदीयमिदमेव च प्रमाणं नान्यदिति, अथो दर्शनग्रहोऽस्मदीय दर्शनं शोभनमन्यदीयमशोभनमित्येवंरूपो 3 स्वनयप्रमाणरूपसिद्धान्तसद्भावो हि विद्वान् नो स्वपरतन्त्रोक्तमर्थं न्यायाविरोधेन प्रतिपद्यते, नत्वेकान्ततस्तत्र विप्रतिपद्यत इति, तथाचाह सम्मतौ महामतिः—णिययवयणिज्जसच्चा सव्वनया परवियालणे मोहा । ते पुण अदिट्ठसमओ विभयइ सच्चे व अलिए वा ॥१॥ ति ॥

रिचरकमञीनन्यचरकचारणविधानतः चरमे-भावनामयज्ञाने सति सर्व्वत्र-सर्व्वेषु जीवेषु हिता वृत्तिः--हितहेतुः प्रवृत्तिः, न कस्यचिदहिता, गाम्भीर्याद्--आशयविशेषात् समरसापत्त्या--सर्व्वानुग्रहणरूपयो। "कयाचित् स्त्रिया कस्यचित्पुरुषस्य वशीकरणार्थं परिव्राजिकोक्ता, यथा इमं मम वशवर्तिनं वृषभं कुरु, तया च किल कुतश्चित्सामर्थ्यात् स वृषभः कृतः, तं चारयन्ती पाययन्ती चास्ते, अन्यदा च वटवृक्षस्याधस्तान्निषण्णे तस्मिन् पुरुषगवे विद्याधरीयुग्ममाकाशगमागमत्, तत्रैकयोक्तं-अयं स्वाभाविको न गौः, द्वितीययोक्तं-कथमयं स्वाभाविको भवति ?, तत्राद्ययोक्तं--अस्य वटस्याधस्तात्सञ्जीवनीनामौषधिरस्ति, यदि तां चरति तदाऽयं स्वाभाविकः पुरुषो जायते, तच्च विद्याधरीवचनं तया स्त्रिया समाकर्णितं, तया चौषधिं विशेषतोऽजानानया सर्व्वामेव चारिं तत्प्रदेशवर्तिनीं सामान्येनैव चारितः यावत्सञ्जीवनीमुपभुक्तवान्, तदुपभोगानन्तरमेवासौ पुरुषः संवृत्तः" एवमिदं लौकिकमाख्यानकं श्रूयते, यथा तस्याः स्त्रियास्तस्मिन् पुरुषगवे हिता प्रवृत्तिः, एवं भावनाज्ञानसमन्वितस्यापि सर्व्वत्र भव्यसमुदायेऽनुग्रहप्रवृत्तस्य हितैव प्रवृत्तिरिति ॥११॥

'विपर्ययो मोहतोऽन्य' इत्युक्तं, स पुनः क इत्याह—

गुर्वादिविनयरहितस्य यस्तु मिथ्यात्वदोषतो वचनात्। दीप इव मण्डलगतो बोधः स विपर्ययः पापः १२

दण्डीखण्डनिवसनं भस्मादिविभूषितं सतां शोच्यम्। पश्यत्यात्मानमलं ग्रही नरेन्द्रादपि ह्यधिकम् १३

मोहविकारसमेतः पश्यत्यात्मानमेवमकृतार्थम्। तद्व्यत्ययालिङ्गरतं कृतार्थमिति तद् ग्रहादेव ॥ १४ ॥

---

१ सर्वतत्त्वमयमूररूपरसमयत्पुरुपतिष्ठनसर्वानुग्रहपरिणत्या

सम्यग्दर्शनयोगाज् ज्ञानं तद् ग्रन्थिभेदतः परमम् । सोऽपूर्वकरणतः स्याज्ज्ञेयं लोकोत्तरं तच्च ॥ १५ ॥

लोकोत्तरस्य तस्मान्महानुभावस्य शान्तचित्तस्य । औचित्यवतो ज्ञानं शेषस्य विपर्ययो ज्ञेयः ॥१६॥११

गुर्वादिविनयरहितस्य-गुरूपाध्यायादिविनयविकलस्य यस्तु-यः पुनर्मिथ्यात्वदोषतो-मिथ्यात्वदोषात्तत्त्वार्थाश्रद्धान-रूपात् [illegible] इव मण्डूकगतो-मण्डूकाकारो बोधः-अवगमस्तैमिरिकस्येव स तथाविधो बोधो वचनात्मक[illegible]पारोप-[illegible] विपर्ययो-मिथ्याबलरूपः परमार्थतस्तत्त्वार्थविषयः पापः स्वरूपेण वर्त्तते ॥ १२ ॥ विपर्यय एव प्रस्तुते दृष्टान्तगर्भ-[illegible] कारिकाद्वयेन-खण्डीखण्डं एकैकं निवसनं-परिधानमस्येति खण्डीखण्डनिवसनस्तं भस्मादिभिर्विभूषितं-विच्छुरितं भस्मादिविभूषितं सतां-सत्पुरुषाणां शोच्यं-शोचनीयं पश्यति-अवलोकयत्यात्मानमलम्-अत्यर्थं ग्रही-ग्रहवान् नरेन्द्रादपि [illegible]-[illegible]ऽप्यधिकं यतोऽपि मन्यते ॥१३॥ मोहविकारसमेतो-मनोविभ्रमदोषसमन्वितः पश्यत्यात्मानमेवमकृतार्थं [illegible] विपर्ययबोधवान् कृतार्थमितिपश्यति, तस्य-कृतार्थस्य ज्ञलयेन यानि लिङ्गानि तेषु रतस्तं तत्प्रत्ययलिङ्गरतम्, अनेनाऽ-[illegible] सत्पुरुषा दर्शयति, एतादृशोऽपि कृतार्थमिति कृतो मन्यते, तत्त्वतस्तदेव-स चासौ ग्रहश्च २ तस्मादेव-विवक्षितग्रहावेशादेव, [illegible] विपर्ययस्य उपनयः कृतः ॥१४॥ ज्ञानविपर्यययोः स्वाम्युपदर्शनार्थमिदं कारिकाद्वयमाह-सम्यग्दर्शनयोगात्-[illegible]त् ज्ञानं-सम्यग्ज्ञानं तत्-सम्यग्दर्शनं ग्रन्थिभेदतो-ग्रन्थिभेदात् परमं-प्रधानं स्वरूपतो वर्त्तते, स-ग्रन्थि-[illegible]संसारच्छेदी अपूर्वकरणतः स्याद्—अपूर्वपरिणामाद्भवेत्, 'ज्ञेयं लोकोत्तरं तच्च' तत्र-

अपूर्वकरणं लोकान् सर्व्वस्मादप्युत्तरं-प्रधानं ज्ञेयम्, अपूर्व्वकरणं-अपूर्व्वपरिणामः शुभः, अनादावपि संसारे तेषु तेषु धर्म्मस्थानेषु यथार्थग्रहणादिषु वर्तमानस्याप्यसञ्जातपूर्व्व इतिकृत्वा ॥ १५ ॥ लोकादुत्तरः-प्रधानो ज्ञानवानिह गृह्यते, तस्य लोकोत्तरस्य, तस्मादिति निगमने, महानुभावस्य-अचिन्त्यशक्तेः शान्तचित्तस्य-उपशान्तमनसः औचित्यवत-औचित्ययुक्तस्य ज्ञानं, अनेन ज्ञानस्वामी निदर्शितः, शेषस्य-उक्तगुणविपरीतस्य विपर्ययो-ज्ञेयो, ज्ञानत्रयादन्यः पदमात्रवाच्यार्थविषयः पूर्वोक्त इति ॥१६॥११॥
इति एकादशं षोडशकम्

## ॥ अथ द्वादशं षोडशकम् ॥

साम्प्रतं ज्ञानत्रयभावाभावयोर्दीक्षाधिकारित्वानधिकारित्वप्रतिपादनायाह—

अस्मिन् सति दीक्षाया अधिकारी तत्त्वतो भवति सत्त्वः । इतरस्य पुनर्दीक्षा वसन्तनृपसन्निभा ज्ञेया १

अस्मिन्-ज्ञानत्रये सति-विद्यमाने दीक्षाया-विरतिरूपाया अधिकारी-अधिकारवान् शास्त्रनयोदितत्त्वेन तत्त्वतः-परमार्थतो भवति सत्त्वः पुमान्, इतरस्य-अनधिकारिणः पुनर्दीक्षा-व्रतरूपा वसन्तनृपसन्निभा-विडम्बनाप्राया चैत्रमासपरिहासकृतराजसन्निभा मुग्धनृपदीक्षावत्सा(सद्दीक्षाका)र्याकरणेन ज्ञेया-ज्ञातव्या ॥ १ ॥ अधुना दीक्षाया निरुक्तमुपदर्शयन् ज्ञानिन एव तां नियमयन्नाह—

श्रेयोदानादशिवक्षपणाच्च सतां मतेह दीक्षेति । सा ज्ञानिनो नियोगाद् यथोदितस्यैव साध्वीति ॥२॥

'श्रेयोदानात्' श्रेयः-सुन्दरं तस्य दानं-वितरणं तस्मात्, अशिवं-प्रत्यवायस्तत्क्षपणाच्च-तन्निरसनाच्च सतां-मुनीनां मता-अभिप्रेता इह-प्रवचने दीक्षेति प्रागुक्ता, इति-एवमनया निरुक्तप्रक्रियया सा-दीक्षा ज्ञानिनो-ज्ञानवतो नियोगात्-नियोगेन यथोदितस्यैवाधिकारिण एव साध्वीति-निरवद्या वर्त्तते ॥ २ ॥ ननु च यदि ज्ञानिन एव नियमेन साध्वी दीक्षा, ततः कथं पूर्वोक्त-ज्ञानत्रयविकलानां माषतुषप्रभृतीनां समये सा श्रेयसी श्रूयत इत्याशङ्क्याह—

यो निरनुबन्धदोषाच्छ्राद्धोऽनाभोगवान् वृजिनभीरुः । गुरुभक्तो ग्रहरहितः सोऽपि ज्ञान्येव तत्फलतः ॥३॥
चक्षुष्मानेकः स्यादन्धोऽन्यस्तन्मतानुवृत्तिपरः । गन्तारौ गन्तव्यं प्राप्नुत एतौ युगपदेव ॥ ४ ॥
यस्यास्ति सत्क्रियायामित्थं सामर्थ्ययोग्यताऽविकला । गुरुभावप्रतिबन्धाद्दीक्षोचित एव सोऽपि किल ५

य एवंविधो 'निरनुबन्धदोषाच्छ्राद्धः' निरनुबन्धो-व्यवच्छिन्नसन्तानो दोषो-रागादिः निरनुबन्धश्चासौ दोषश्च २ तस्माच्छ्राद्धः श्रद्धावान्, यस्तु सानुबन्धदोषान्निरुपक्रमक्लिष्टकर्म्मलक्षणात् कथञ्चिच्छ्राद्धो भवति स नेह गृह्यते, 'अनाभोगवान्' अनाभोगः-अपरिज्ञानमात्रमेव केवलं ग्रन्थार्थादिषु सूक्ष्मबुद्धिगम्येषु स विद्यते यस्य स तथा, वृजिनं-पापं तद्भीरुर्वृजिनभीरुः, संसारविरक्तत्वेन, गुरवः-पूज्यास्तेषु भक्तो गुरुबहुमानात् ग्रहः-आग्रहो मिथ्याभिनिवेशस्तेन रहितो ग्रहरहितः, अनेन सम्यग्दर्शनवत्त्वमस्यावेदयति, सोऽपि य एवमुक्तविशेषणवान् ज्ञान्येव-ज्ञानवानेव, तत्फलतो-ज्ञानफलसम्पन्नत्वेन, ज्ञानस्यापि ह्येतदेव फलं संसारविरक्तत्व-गुरुभक्तिमत्त्वादि तदस्यापि विद्यते इतिकृत्वा ॥ ३ ॥ कथं पुनर्ज्ञानफलं माषतुषादेर्गुरुबहुमानमात्रेण तथाविधज्ञानविकलस्य सन्मार्ग्ग-

गमनादीत्याशङ्कयाह– चक्षुष्मलमनुपहतं विद्यते यस्य स चक्षुष्मान् एकः–कश्चित् स्यात्–भवेत्पुरुषो मार्गगमनप्रवृत्तः अन्धो–दृष्टिरहितोऽन्यः–तदपरः, केवलं मार्गानुसारितया विशिष्टविवेकसम्पन्नत्वेन च तन्मतानुवृत्तिपरः–चक्षुष्मतो मतं—अभिप्रायो रस्तं वा तन्मूलं तदनुवृत्तिपरः–तदनुवर्त्तनप्रधानः, शेषानुमतवर्तनपरित्यागेन, एतौ द्वावपि चक्षुष्मतसदन्धौ गन्तारौ–गमनशीलावनवरतप्रयाणवृत्त्या गन्तव्यं–विवक्षितनगरादि प्राप्नुत एतौ युगपदेव–एककालमेव, इदमुक्तं भवति–चक्षुष्मान् पुरस्ताद् व्रजति अन्धस्तु पृष्ठतः, एवमनयोर्व्रजतोरेकपदन्यास एवान्तरं, नापरं महद्, यदि वा तदपि समानपदन्यासयोः साहित्येन बाहुलग्नयोर्व्रजतोर्नास्तीत्येवमेककाला प्राप्तव्यनगरादिस्थानप्राप्तिर्द्वयोरपीति, यथैवमेतयोर्नान्तरं तथा गुरुमार्गतुल्यशिष्ययोर्ज्ञान्यज्ञानिनोः फलं प्रति सन्मार्गगमनप्रवृत्तयोर्मार्गपर्यन्तप्राप्तौ मुक्त्यवस्थायां न किञ्चिदन्तरमिति गर्भार्थः ॥ ४ ॥ एवं समानफलत्वं ज्ञान्यज्ञानिनोः प्रतिपाद्य दीक्षार्हत्वं विशेषज्ञानागमन्वितस्यापि दर्शयति—यस्य विशिष्टज्ञानरहितस्याप्यस्ति–विद्यते सत्क्रियायां—सदाचारे इत्थमनेन प्रकारेण सामर्थ्ययोग्यता–सामर्थ्येन समानफलसाधकत्वरूपेण योग्यताऽविकला–परिपूर्णा गुरुषु–धर्म्माचार्यादिषु भावप्रतिपत्त्यात्–भावतः प्रतिपद्यत्वेन हेतुना दीक्षोचित एव–दीक्षायोग्य एव यः प्रस्तुतः, किलेत्याप्तागमवादः, यतः संसारविरक्त एवासौ अधिकारी, शेषगुणवैकल्येऽपीत्युक्तम् ॥ ५ ॥ इदानीं दीक्षायाः समानफलतया देयत्वमभिदधानो विषमफलस्य चादेयत्वमुपदर्शयन्निदमाह—

देयाऽस्मै विधिपूर्वं सम्यक्तन्त्रानुसारतो दीक्षा । निर्व्वाणबीजमेषेत्यनिष्टफलदान्यथात्यन्तम् ॥ ६ ॥

देया–दातव्याऽस्मै–योग्याय विधिपूर्वं–विधानपूर्वं सम्यग्–अवैपरीत्येन तन्त्रानुसारतः–शास्त्रानुसारतो दीक्षा–व्रतरूपा

निर्व्वाणस्य बीजं मोक्षसुखयोर्हेतुत्वेन एषेति दीक्षेव, अनिष्टफलदा-विपर्य्ययफला संसारफला अन्यथा अयोग्याय दीयमाना-अत्यन्तं-अतिशयेनेति ॥ ६ ॥ का पुनरियं दीक्षेत्याह—

देशसमग्राख्येयं विरतिर्न्यासोऽत्र तद्वति च सम्यक् । तन्नामादिस्थापनमविद्रुतं स्वगुरुयोजनतः ॥७॥

नामनिमित्तं तत्त्वं तथा तथा चोद्धृतं पुरा यदिह । तत्स्थापना तु दीक्षा तत्त्वेनान्यस्तदुपचारः॥ ८॥

कीर्त्यारोग्यध्रुवपदसम्प्राप्तेः सूचकानि नियमेन । नामादीन्याचार्या वदन्ति तत् तेषु यतितव्यम्॥ ९ ॥

तत्संस्कारादेषा दीक्षा सम्पद्यते महापुंसः । पापविपापगमात् खलु सम्यग्गुरुधारणायोगात् ॥ १० ॥

देशाख्या समग्राख्या चेयं दीक्षा विरतिरुच्यते, देशविरतिदीक्षा सर्वविरतिदीक्षा चेत्यर्थः, न्यासो-निक्षेपोऽत्र दीक्षायां, व्रतन्यास इत्यर्थः, सा विद्यते यस्य स तद्वान् तस्मिंस्तद्वति च पुरुषे देशदीक्षावति सर्व्वदीक्षावति च सम्यक्-समीचीनं सङ्गतं 'तन्नामादिस्थापनं' तेषां-प्रवचनप्रसिद्धानां नामादीनां चतुर्णां स्थापनं-आरोपणं अविद्रुतं-उपद्रवरहितमनुपप्लवमितियावत्, कथं तन्नामादिस्थापनम्? 'स्वगुरुयोजनतः' स्वगुरुभिः-आत्मीयपूज्यैर्योजनं-सम्बन्धनमौचित्येन यत्र तन्नामादीनां ततः सकाशात् ॥७॥ कथं पुनर्विशिष्टना-मन्यासस्य स्वगुरुभिः प्रसादीकृतस्य दीक्षानिमित्तत्वमिति मन्यमानं परं प्रत्याह-नामनिमित्त-नामहेतुकं तद्वारस्तत्त्वं-नामप्रतिपाद्यगुणात्मकत्वं, कृतप्रशान्तादिनाम्नः प्रशमादिरूपोपलम्भात्, तन्नाम्नि च तद्गुणस्मरणाद्युपलब्धेः, तथा तथा चोद्धृतं-तेन तेन

१ स्वगुरुभिर्योजन स्वजीतानुरोधेन विधान तत २ तत्तदभिप्रायस्मरणात्तत्तद्गुणानुकूलप्रवृत्त्या तत्तद्गुणसिद्धेः

स्वरूपेणोद्धृतम्–उद्धं कृतनिर्व्वाहं पुरा–पूर्व्वं, यद्–यस्मादिह प्रवचने मुनिभिः तत्स्थापना तु–तस्यैव नाम्नः स्थापनैव नामन्यास एव दीक्षा–प्रस्तुता तत्त्वेन–परमार्थेन, अन्यस्तदुपचारः–अन्यक्रियाकलापस्तदुपचारस्तस्याः–दीक्षाया उपचारो वर्त्तते, विधोपचारात् ॥ ८ ॥ कस्मात्पुनर्नामादिन्यासे महानादरः क्रियत इत्याशङ्क्याह– कीर्त्तिः–श्लाघा आरोग्यं–नीरुजत्वं प्राक्तनसहजौत्पातिकरोगविरहेण, ध्रुवं–स्थैर्यं भावप्राधान्यान्निर्देशस्य पदं–स्थानं विशिष्टपुरुषावस्थारूपमाचार्यत्वादि कीर्त्तिश्चारोग्यं च ध्रुवं च पदं च कीर्त्त्यारोग्यध्रुवपदानि तेषां सम्प्राप्तिः–अपूर्व्वलाभस्तस्या अप्राप्तिपूर्विकायाः प्राप्तेः सूचकानि–गमकानि नियमेन–अवश्यन्तया नामस्थापनाद्रव्यभावरूपाणि आचार्याः–पूज्या वदन्ति–ब्रुवते । तत्–तस्मात्तेषु नामादिषु यतितव्यं–यत्नो विधेयः, इह चेदं तात्पर्य्यमवसेयं–अन्वर्थनाम्नो हि कीर्त्तनमात्रादेव शब्दार्थप्रतिपत्तेर्विदुषां प्राकृतजनस्य च मनःप्रसादात्कीर्त्तिराविर्भवति, यथा सुधर्म्मभद्रबाहुस्वामिप्रभृतीनामुत्तमपुरुषाणां प्रवचने कीर्त्तिरुदपादि, स्थापनाऽप्याकारवती रजोहरणमुखवस्त्रिकादिधारणद्वारेण भावगर्भप्रवृत्त्या आरोग्यमुपजनयति, द्रव्यमप्याचारादिश्रुतं सकलसाधुक्रिया चाभ्यस्यमाना व्रतस्थैर्योपपत्तये प्रभवति, भावोऽपि सम्यग्दर्शनादिरूपः पूर्व्वोक्तपदावाप्तये सम्पद्यते, नहि विशिष्टभावमन्तरेणागमोक्तविशिष्टपदावाप्तिर्भाववतो भवति, अथवा सामान्येनैव कीर्त्त्यारोग्यमोक्षसम्प्राप्तेः सूचकानि सर्व्वाण्येव नामादीनि ॥ ९ ॥ किमिति दीक्षाप्रस्तावे नामादिषु यतितव्यमित्याशङ्क्याह–तत्संस्कारात्–नामादिसंस्कारादेषा–द्विविधा दीक्षा–व्रतरूपा सम्पद्यते–सम्भवति महापुंसो–महापुरुषस्य, न ह्यमहापुरुषा व्रतधारिणो भवन्ति,

---

१ नामस्थापनारूपमुख्यदीक्षाक्रमणः पूर्वोत्तरभावेनाङ्गमात्ररूप इत्यर्थः ॥ ८ ॥

पापं विषमिव पापविषं तस्यापगमतः खलु-अपगमादेव पापविषयोर्वाऽपगमात्, विषापहारिणी दीक्षेति, सम्यग्-अवैपरीत्त्येन गुरुश्च धारणा च गुरुधारणे ताभ्यां योगः-संबन्धस्तस्माद् गुरुधारणायोगात्, गुरुयोगात्पापापगमो धारणायोगादेव विषापगम इति ॥ १० ॥ 'दीक्षा सम्पद्यते महापुंस' इत्युक्तं, तत्सम्पत्तौ सर्व्वविरतस्य यद्भवति तदाह—

सम्पन्नायां चास्यां लिङ्गं व्यावर्णयन्ति समयविदः । धर्मैकनिष्ठतैव हि शेषत्यागेन विधिपूर्वम् ॥ ११ ॥

सम्पन्नायां च-सञ्जातायां चास्यां-दीक्षायां लिङ्गं-लक्षणं व्यावर्णयन्ति-कथयन्ति समयविदः--आगमवेदिनः, धर्म्मैकनिष्ठतैव हि-धर्म्मतत्परतैव हि शेषत्यागेन--धर्म्मादन्यः शेषस्तत्त्यागेन--तत्परिहारेण विधिपूर्व्वं--शास्त्रोक्तविधानपुरस्सरं यथा भवत्येवं शेषत्यागेन धर्मैकनिष्ठता सेवनीया, नान्यथेतिभावः ॥ ११ ॥ अस्यामेव सर्व्वविरतिदीक्षायां क्षान्त्यादियोजना-मार्याद्वयेन दर्शयति—

वचनक्षान्तिरिहादौ धर्मक्षान्त्यादिसाधनं भवति । शुद्धं च तपो नियमाद्यमश्च सत्यं च शौचं च ॥१२॥
आकिञ्चन्यं मुख्यं ब्रह्मापि परं सदागमविशुद्धम् । सर्वं शुक्लमिदं खलु नियमात्संवत्सरादूर्ध्वम् ॥१३॥

वचनक्षान्तिः-आगमक्षान्तिरिह-दीक्षायामादौ-प्रथमं धर्मक्षान्त्यादिसाधनं भवति, आदिशब्दात् धर्म्ममार्दवादिग्रहः, धर्म्मक्षान्त्यादीनां साधनं वचनक्षान्तिर्भवति, तत्पूर्व्वकत्वात्तेषां, शुद्धं च-अक्लिष्टं च तपो द्वादशभेदं नियमात्-नियमेन यमश्च-संयमश्च सत्यं-च-अविसंवादनादिरूपं शौचं च बाह्याभ्यन्तरभेदम् ॥ १२ ॥ अकिञ्चनस्य भाव आकिञ्चन्यं मुख्यं--निरुपचरितम्

ब्रह्मापि—ब्रह्मचर्यं परं प्रधानं सदागमविशुद्धं—सदर्थप्रतिपादक आगमः सदागमस्तेन विशुद्धं—निर्दोषं सर्व्वं—पूर्वोक्तं दशविधमपि क्षान्त्यादि शुक्लमिदं खलु—निरतिचारमिदमेव नियमाद् इतरव्यावृत्त्या शुक्लस्य शुक्लनिवर्त्तकत्वात्, संवत्सरादूर्ध्वं—क्रियामलत्यागेन संवत्सरकालात्ययेन शुक्लं भवतीति ॥ १३ ॥ अस्यैव दीक्षावतः पूर्व्वोत्तरकालभाविगुणयोगमाह—

ध्यानाध्ययनाभिरतिः प्रथमं पश्चात्तु भवति तन्मयता। सूक्ष्मार्थालोचनया संवेगः स्पर्शयोगश्च ॥१४॥

स्पर्शस्तत्तत्त्वाप्तिः संवेदनमात्रमविदितं त्वन्यत्। वन्ध्यमपि स्यादेतत्स्पर्शस्त्वक्षेपतत्फलदः ॥ १५ ॥

व्याध्यभिभूतो यद्वन्निर्विण्णस्तेन तत्क्रियां यत्नात्। सम्यक्करोति तद्वद्दीक्षित इह साधुसच्चेष्टाम् ॥१६॥१२॥

ध्यानं धर्म्यं शुक्लं च स्थिराध्यवसानरूपं, यथोक्तम्—"एकालम्बनसंस्थस्य, सदृशप्रत्ययस्य च। प्रत्ययान्तरनिर्मुक्तः, प्रवाहो ध्यानमुच्यते ॥ १ ॥" अध्ययनं—स्वाध्यायपाठः, ध्यानं चाध्ययनं च ध्यानाध्ययने, अध्ययनपूर्व्वकत्वेऽपि ध्यानस्याल्पाच्तरत्वा-दभ्यर्हणीयत्वाच्च पूर्व्वनिपातः, तयोरभिरतिः—आसक्तिरनवरतप्रवृत्तिः प्रथमम्—आदौ दीक्षासम्पन्नस्य पश्चात्तु-पश्चात्पुनर्भवति तन्म-यता—तन्मयत्वं तत्परता, सूक्ष्माश्च तेऽर्थाश्च—बन्धमोक्षादयस्तेषामालोचना तया सूक्ष्मार्थालोचनया संवेगो—मोक्षाभिलाषः 'स्पर्शयोगश्च' स्पर्शः—तत्त्वज्ञानं तेन योगः सम्भवतीति॥१४॥'स्पर्शयोगश्चे'त्युक्तं, तत्र स्पर्शलक्षणमाह-स्पृश्यतेऽनेन वस्तुनस्तत्त्वमिति स्पर्शः, स च कीदृगित्याह-तत्तत्त्वाप्तिः-तस्य तस्य वस्तुनो जीवादेस्तत्त्वं-स्वरूपं तस्याप्तिः—उपलम्भो ज्ञानं स्पर्श उच्यते, संवेदनमात्रं-वस्तुस्वरूपपरामर्शशून्यमविदितं त्वन्यत्—कथञ्चिद्वस्तुग्राहित्वेऽपि न विदितं वस्तु तदित्यविदितमुच्यते, वन्ध्यमपि—विफलमपि

स्यादेतत–संवेदनमात्रं स्पर्शस्तु–स्पर्शः पुनः 'अक्षेपतत्फलदः' अक्षेपेणैव तत्–स्वसाध्यं फलं ददातीत्ययमनयोः स्पर्शसंवेदनयोर्विशेष इति ॥१५॥ संवेगस्पर्शयोगेन दीक्षावान् यत् करोति तदाह–व्याधिना–कुष्ठादिनाऽभिभूतो–ग्रस्तो यद्वद्–यथा निर्विण्णः–निर्वेदं ग्राहितस्तेन–व्याधिना तत्क्रियां–तच्चिकित्सां व्याधिप्रतीकाररूपां यत्नाद्–यत्नेन सम्यक्करोति–विधत्ते तद्वत्—तथा दीक्षित इह प्रक्रमे साधूनां सच्चेष्टा–विनयादिरूपा तां साधुसच्चेष्टाम् ॥ १६ ॥ १२ ॥ इति द्वादशं षोडशकम् ॥

## अथ त्रयोदशं षोडशकम् ॥

'सा धुसच्चेष्टां सम्यक्करोति' इत्युक्तं, तामेवोपदर्शयितुमाह—

**गुरुविनयः स्वाध्यायो योगाभ्यासः परार्थकरणं च । इतिकर्त्तव्यतया सह विज्ञेया साधुसच्चेष्टा ॥ १ ॥**

गुरुविनयो–वक्ष्यमाणः शोभनं अभिव्याप्त्याऽध्ययनं स्वाध्यायः स्वकीयमध्ययनं वा अयमभिधास्यमान एव योगो–ध्यानं तस्याभ्यासः–परिचयोऽयमपि वक्ष्यमाणस्वरूप एव, परस्यार्थः–उपकारस्तत्करणं च वक्ष्यमाणं इतिकर्त्तव्यतया–अभिधास्यमाणस्वरूपया सह–सार्द्धं विज्ञेया–वेदितव्या साधूनां सच्चेष्टा साधुसच्चेष्टा ॥ १ ॥ गुरुविनयस्वरूपमाह—

**औचित्याद् गुरुवृत्तिर्बहुमानस्तत्कृतज्ञताचित्तम् । आज्ञायोगस्तत्सत्यकरणता चेति गुरुविनयः ॥ २ ॥**

औचित्याद्–औचित्येन पुरुषभूमिकापेक्षया गुरुवृत्तिः–गुरुषु वर्त्तनं वैयावृत्त्यद्वारेण बहुमानः–आन्तरः प्रीतिविशेषो भावप्रतिबन्धः सदन्तःकरणलक्षणो, न मोहो, मोहो हि ससङ्गप्रतिपत्तिरूपः शास्त्रे निवार्यते गुरुषु, गौतमस्नेहप्रतिबन्धन्यायेन, तस्य मोक्षं

प्रत्युपकारकत्वात्, मोक्षानुकूलस्य तु भावप्रतिबन्धस्यानिषेधात्, ततः सकलकल्याणसिद्धेः, यो हि गुरुकृतमुपकारमात्मविषयं विशिष्टविवेकसम्पन्नतया जानाति, यथाऽस्मास्वनुग्रहप्रवृत्तैः स्वकीयक्लेशानिरपेक्षतया रात्रिन्दिवं महान् प्रयासः शास्त्राध्ययनपरिज्ञानविषयः प्रभूतं कालं यावत्कृत इति स कृतज्ञ उच्यते, अथवाऽल्पमप्युपकारं भूयांसं मन्यते, अथवा कृताकृतयोर्लोकप्रसिद्धयोर्विभागेन कृतस्य प्रतिपाद्यविशेषविषयं स्वरूपं परिच्छिनत्ति, न पुनर्जडतया कृतमपि साक्षात्प्रणालिकया वा न वेत्ति, ततस्तद्भावः कृतज्ञता, तेषु गुरुषु कृतज्ञतासहितं चित्तं तत्कृतज्ञताचित्तं । आज्ञायोगः–आज्ञा नियोगः शासनं, यथा राजाऽऽज्ञा राजशासनं तस्यां योगः–उत्साहः तया वा आज्ञया योगः–सम्बन्धः, आज्ञां दत्तां न विफलीकर्तुमिच्छति, 'तत्सत्यकरणता चेति' तेषां गुरूणां सत्यकरणता, यत्तैरुक्तं तत्तथैव तेषु विद्यमानेषु स्वर्भेयमापन्नेषु वा सम्पादयति, एवं तद्वचः सत्यं कृतं भवति, इति गुरुविनयः–एवमेते सर्वेऽपि प्रकारा औचित्याद् गुरुशुश्रूषादयो भवति प्रागुक्तः ॥ २ ॥ अधुना स्वाध्यायमाह—

यत्तु खलु वाचनादेरासेवनमत्र भवति विधिपूर्वम् । धर्मकथान्तं क्रमशस्तत्स्वाध्यायो विनिर्दिष्टः ॥ ३ ॥

यत्तु–यत्पुनः, खलुशब्दो वाक्यालङ्कारे, वाचनादेः–वाचनाप्रश्नानुप्रेक्षादेः 'आसेवनम्' अभिव्याप्त्या मर्यादया वा प्रवचनोक्तया सेवनं–करणमत्र–प्रक्रमे भवति–जायते विधिपूर्वं–विधिमूलं धर्मकथान्तं–धर्मकथावसानं क्रमशः–क्रमेण तदासेवनं स्वाध्यायोऽपि–पूर्वोक्तनिर्वचनो विनिर्दिष्टः–कथित इति ॥ ३ ॥ योगाभ्यासमाह—

स्थानोर्णार्थालम्बनतदन्ययोगपरिभावनं सम्यक् । परतत्त्वयोजनमलं योगाभ्यास इति तत्त्वविदः ॥४॥

स्थीयतेऽनेनेति स्थानं-आसनविशेषरूपं कायोत्सर्गपर्यङ्कबन्धपद्मासनादि सकलशास्त्रसिद्धं ऊर्णः-शब्दः, स च वर्णात्मकः, अर्थः-शब्दस्याभिधेयं आलम्बनं-बाह्यो विषयः प्रतिमादिः, तस्मादालम्बनाद् अन्यः-तद्विरहितस्वरूपोऽनालम्बन इतियावत्, स्थानं चोर्णश्चार्थश्चालम्बनं च तदन्यश्च २ एत एव योगास्तेषां परिभावनं-सर्वतोऽभ्यसनं सम्यक्-समीचीनं परं तत्त्वं योजयतीति परतत्त्वयोजनं, मोक्षेण योजनाद्, अलं-अत्यर्थं योगस्य-योगाङ्गरूपस्य ध्यानस्य त्वभ्यासः-परिचयो योगाभ्यासः इतीत्थं तत्त्वविदोऽभिवदन्ति, कथं पुनः स्थानादीनां योगरूपत्वं येन तत्परिभावनं योगाभ्यासो भवेत् ?, उच्यते, योगाङ्गत्वेन, योगाङ्गस्य च शास्त्रेषु योगरूपताप्रसिद्धिर्हेतुफलभावेनोपचारात्, योगाङ्गत्वं तु स्थानादीनां प्रतिपादितमेव योगशास्त्रेषु, यथोक्तम्-"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" । (पातञ्जलयो. पा० २-२९) ॥ ४ ॥ परार्थकरणमाह—

विहितानुष्ठानपरस्य तत्त्वतो योगशुद्धिसचिवस्य । भिक्षाटनादि सर्वं परार्थकरणं यतेर्ज्ञेयम् ॥ ५ ॥

विहितानुष्ठानपरस्य-शास्त्रविहितासेवनपरस्य तत्त्वतः-परमार्थेन योगशुद्धिसचिवस्य—मनोवाक्कायविशुद्धिसहितस्य भिक्षाटनादि-भिक्षाटनवस्त्रपात्रैषणादि सर्वमनुष्ठानं परार्थकरणं-परोपकारकरणं यतेः-साधोर्ज्ञेयं-ज्ञातव्यं भवति, आहारवस्त्रपात्रादि यतिना गृह्यमाणस्य दातॄणां पुण्यबन्धनिमित्तत्वात् तस्य च साधुहेतुकत्वादिति ॥ ५ ॥ इतिकर्तव्यतामाह—

१ यदि चित्तवृत्तिनिरोधो योगलक्षणं तदा स्थानादीनां योगाङ्गत्वेऽपि योगत्वोपचारो, यदि च मोक्षयोजकव्यापारत्वमात्रं तदा नोपचार इति ध्येयम् २ यतिना गृह्यमाणस्याहारवस्त्रपात्रादेर्दातुः पुण्यनिबन्धनत्वेन परोपकारहेतुत्वाद्विशुद्धयोगप्रवृत्तेश्चोचितप्रवृत्तिहेतुसामयिकदशत्वा तदर्थिना नियतत्वादिति द्रष्टव्यम्

सर्वत्रानाकुलता यतिभावाव्ययपरा समासेन । कालादिग्रहणविधौ क्रियेतिकर्त्तव्यता भवति ॥ ६ ॥

सर्वत्र–सर्वस्मिन्ननाकुलता–निराकुलता अन्तरा यतेर्भावः–सामायिकरूपस्तस्याव्ययपरा–व्ययाभावनिष्ठा, अनाकुलतया यतिभावाव्ययपरा न किञ्चिद्यतिभावाद् व्येति–अपगच्छतीतिकृत्वा तथोच्यते, विशेष्यत्वात् क्रियाऽभिसम्बध्यते, समासेन–सङ्क्षेपेण कालादिग्रहणविधौ–कालस्वाध्यायादिग्रहणविधिविषया क्रिया–चेष्टा स्वशास्त्रप्रसिद्धा इतिकर्त्तव्यता भवति, इति एवंरूपा कर्त्तव्यानां भावः कर्त्तव्यतोच्यते ॥ ६ ॥ उक्ता साधुचेष्टा, अधुना तद्वतो मैत्र्यादिसिद्धिमाह—

इति चेष्टावत उच्चैर्विशुद्धभावस्य सद्यतेः क्षिप्रम् । मैत्रीकरुणामुदितोपेक्षाः किल सिद्धिमुपयान्ति ॥७॥

इति–एवमुक्तप्रकारेण चेष्टावतः–साधुचेष्टायुक्तस्य उच्चैः–अत्यर्थं विशुद्धभावस्य–विशुद्धाध्यवसायस्य सद्यतेः–सत्साधोः क्षिप्रं–अचिरेण मैत्रीकरुणामुदितोपेक्षाः–पूर्वोक्ताश्चतस्रो भावनाः किल सिद्धिमुपयान्ति–किलेत्याप्तागमवादो निष्पत्तिं प्रतिलभन्ते ॥ ७ ॥ अधुनैतद्गतमेवाह—

एताश्चतुर्विधाः खलु भवन्ति सामान्यतश्चतस्रोऽपि । एतद्भावपरिणतावन्ते मुक्तिर्न तत्रैताः ॥ ८ ॥

उपकारिस्वजनेतरसामान्यगता चतुर्विधा मैत्री । मोहासुखसंवेगान्यहितयुता चैव करुणेति ॥ ९ ॥

सुखमात्रे सद्धेतावनुबन्धयुते परे च मुदिता तु । करुणानुबन्धनिर्वेदतत्त्वसारा ह्युपेक्षेति ॥ १० ॥

१ तथिन्द्रियनियमक्रमपुरुषियामन्त्रानयेनि कर्त्तव्यतापदार्थत्वात्

एताः खल्वभ्यासात् क्रमेण वचनानुसारिणां पुंसाम् । सद्वृत्तानां सततं श्राद्धानां परिणमन्त्युच्चैः॥११॥

एतद्रहितं तु तथा तत्त्वाभ्यासात्परार्थकार्येव । सद्बोधमात्रमेव हि चित्तं निष्पन्नयोगानाम् ॥ १२ ॥

अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः । कुलयोग्यादीनामिह तन्मूलाधानयुक्तानाम् ॥१३॥

'एताः'-मैत्र्याद्याः चतुर्विधाः-चतुष्प्रकाराः खलुशब्दो वाक्यालङ्कारे भवन्ति-जायन्ते सामान्यतः-सामान्येन चतस्रोऽपि प्रस्तुताः एतासां भावपरिणतिः-विशिष्टस्वरूपलाभस्तस्यां सत्यामन्ते-पर्यवसाने प्रकर्षप्राप्तौ मुक्तिः-निर्वृत्तिः न तत्रैताः-तस्यां मुक्तौ नैताः सम्भवन्ति, सांसारिकभावोत्तीर्णरूपत्वान्मुक्तेः ॥ ८ ॥ 'एताश्चतुर्विधा' इत्युक्तं, तदेव चातुर्विध्यं प्रत्येकमभिधातुमाह— उपकारी च स्वजनश्चेतरश्च सामान्यं च२ एतद्गता-एतद्विषया चतुर्विधा-चतुर्भेदा मैत्री भवति, उपकर्तुं शीलमस्येत्युपकारी, उपकारं विनिधितपुरुषसम्बन्धिनमाश्रित्य या मैत्री लोके प्रसिद्धा सा प्रथमा, स्वकीयो जनो नालप्रतिबद्धादिस्तस्मिन्नुपकारमन्तरेणापि स्वजन इत्येव या मैत्री तदुद्धरणादिरूपा प्रवर्तते सा द्वितीया, इतरः-प्रतिपन्नः पूर्वपुरुषप्रतिपन्नेषु वा स्वजनसम्बन्धनिरपेक्षा या मैत्री सा तृतीया, सामान्ये-सामान्यजने सर्वस्मिन्नेव अपरिचिते परिचितेऽपि हितचिन्तनरूपा प्रतिपन्नत्वसम्बन्धनिरपेक्षा चतुर्थी मैत्री॥ मोहश्चा-सुखं च संवेगश्चान्यहितं च२ तैर्युता चैव-समन्विता चैव करुणेति-करुणा भवति । मोहः-अज्ञानं तेन युता ग्लानापथ्यवस्तुमार्गण-प्रदानाभिलाषरूपा प्रथमा, असुखं-सुखाभावो यस्मिन् प्राणिनि, दुःखिते सुखं नास्ति, तस्मिन् याऽनुकम्पा लोकप्रसिद्धा आहारवस्त्रशय-नासनादिप्रदानलक्षणा सा द्वितीया, संवेगो-मोक्षाभिलाषस्तेन सुखितेष्वपि सत्त्वेषु प्रीतिमत्तया सांसारिकदुःखपरित्राणेच्छा छद्मस्थानां

या स्वभावतः प्रवर्तते सा तृतीया, अन्यहितयुता–सामान्येनैव प्रीतिमचासम्बन्धविकलेष्वपि सर्वेष्वेवान्येषु सत्त्वेषु केवलिनामिव भगवतां महामुनीनां सर्वानुग्रहपरायणा हितबुद्धा चतुर्थी करुणा ॥ ९ ॥ सुखमात्रा–सामान्येनैव वैषयिकं यदपथ्याहारतृप्तिजनितपरिणामासुन्दरपरि(सुख)रूपं स्वपरजीवप्रतिष्ठितं तस्मिन् प्रथमा मुदिता, सतः–शोभनस्य परिणामसुन्दरस्य हितमिताहारपरिणामजनितस्यैव परिहृष्टस्यैहलौकिकस्य सुखस्य यो हेतुस्तथाविधाहारपरिभोगजनितस्वादुरसास्वादसुखकल्पः स्वपरगतस्तस्मिन् सद्वेतावैहलौकिके सुखविशेषे द्वितीया, अनुबन्धः–सन्तानोऽव्यवच्छिन्नसुखपरम्परया देवमनुजजन्मसु कल्याणपरम्परारूपस्तेन प्रयुज्यते सुखे परभवेहभवापेक्षया आत्मपरापेक्षया च तृतीया, परं–प्रकृष्ट मोहक्षयादिसम्भवमव्याबाधं च यत्सुखमनवद्यं शाश्वतं च तस्मिन् चतुर्थी मुदिता, करुणा चानुबन्धश्च निर्वेदश्च तत्त्वं च २ एतानि सारो यस्या उपेक्षायाः सा तथोक्ता, करुणासाराऽनुबन्धसारा निर्वेदसारा तत्त्वसारा चेति चतुर्विधोपेक्षा, करुणा–घृणा, सा चेहातुरापथ्यासेवनविषया, तथाहि–आतुरस्य स्वातन्त्र्यादपथ्यं सेवमानस्य तन्निवारणमपर्याप्तोपेक्षां करोति, यद्यप्ययमहितमासेवत इति जानाति तथापि न निवारयतीयं करुणासारोपेक्षा, अनुबन्धः–कार्यविषयः प्रवाहपरिणामस्तत्सारा, यथा कश्चित् कृतभिदालस्यादेरर्थार्जनादिषु न प्रवर्तते, त चाप्रवर्तमानमन्यदा तद्धितार्थी प्रवर्तयति, विवक्षिते तु काले परिणामसुन्दरं कार्यसन्तानमवेक्षमाणो यदा माध्यस्थ्यमवलम्बते तदा तस्यानुबन्धसारोपेक्षा, निर्वेदो–निर्विण्णता तत्सारा, नारकतिर्यग्नरामरभवेषु नानाविधानि दुःखानि वेदयतो जीवस्य कथञ्चिन्मनुजदेवगतिषु सर्वेन्द्रियोत्सवकरं संसारिसत्त्वाह्लादकं सुखविशेषमनुपश्यतोऽपि तदसारताकादाचित्कत्वाभ्यां तस्मिन्नुपेक्षां कुर्वाणस्य निर्वेदसारोपेक्षा, तत्त्वं–परमार्थस्तद्भावस्तत्त्वमिति वस्तुस्वभावो वा तत्सारा, मनोज्ञामनोज्ञानां वस्तूनां जीवाजीवात्मकानां परमार्थतो रागद्वेषानुत्पादकत्वेन स्वापराधमेव मोहादिकर्मविकार-

निर्व्वेदाभावेऽपि भवतीति ॥ १० ॥ केषां पुनरेताश्चतस्रो मैत्र्याद्याः परिणमन्तीत्याह—एताः प्रागुक्ता खलुशब्दः पुनःशब्दार्थ अभ्यासात्-परिचयात् पुनः पुनरावृत्तेः क्रमेण-आनुपूर्व्या वचनानुसारिणां-आगमानुसारिणां पुंसां-मानवानां सद्वृत्तानां-सच्चरित्राणां सततं-अनवरतं श्राद्धानां-श्रद्धायुक्तानां परिणमन्ति-आत्ममाद्भवन्ति उच्चैः-अत्यर्थम्॥ ११॥ निष्पन्नयोगानां चित्तं किमेतत्सहितं?, नेत्याह-एतद्रहितं तु-मैत्र्यादिभावनारहितं तु तथा-तेन प्रकारेणेतरासंभविना तत्त्वाभ्यासात्-परमार्थाभ्यासात् तत्स्वरूपाभ्यासाद्वा परार्थकार्येव-परोपकारकरणैकशीलमेव, सद्बोधमात्रमेव हि-निर्मलज्ञानमात्रमेव हि शेषदोषवियुक्तं चित्तं-चेतनास्वभावं निष्पन्नयोगानां-योगिविशेषाणां तु, लिङ्गं चेदं-"दोषव्यपायः परमा च धृतिरौचित्ययोगः समता च गुर्वी। वैरादिनाशोऽथ ऋतंभरा धीर्निष्पन्नयोगस्य तु चिह्नमेतत् ॥१॥१२॥" 'अभ्यासात् क्रमेण परिणमन्ती'त्युक्तं, स कथं शुद्धः? केषां च भवतीत्याह-अभ्यासोऽपि-परिचयोऽपि प्रायो-बाहुल्येन प्रभूतजन्मानुगः-अनेकजन्मानुगतो भवति-जायते शुद्धो-निर्दोषः कुलयोग्यादीनां—गोत्रयोगिप्रवृत्तचक्रप्रभृतीनां इह-प्रक्रमे तासां-मैत्र्यादीनां मूलाधान-मूलस्थापनं बीजन्यासस्तद्युक्तानां, कुलयोगिलक्षणं चेदं-"ये योगिनां कुले जातास्तद्धर्मानुगताश्च ये। कुलयोगिन उच्यन्ते, गोत्रवन्तोऽपि नापरे ॥१॥ सामान्येनोत्तमा

१ एतच्च योगारम्भकारब्धयोगान् प्रत्युक्तं, निष्पन्नयोगानां तु चित्तं कीदृशमित्याह २ पूर्वलक्षणं चैतत् "अलौल्यमारोग्यमनिष्ठुरत्वं, गन्धः शुभो मूत्रपुरीषमल्पम्। कान्तिः प्रसादः स्वरसौम्यता च, योगप्रवृत्तेः प्रथमं हि चिह्नम् ॥१॥ मैत्र्यादियुक्तं विषयेषु चेतः, प्रभावबद्धैर्यसमन्वितं [redacted]। द्वन्द्वैरधृष्यत्वमभीष्टलाभो, जनप्रियत्वं च तथापरं स्यादिति ॥२॥" ३ शतक्षारपुटशोधितरत्नन्यायेन प्रवृत्तचक्राश्च प्रवृत्तरात्रिन्दिवानुष्ठानसमूहा ज्ञेयाः

भव्या गोत्रयोगिनः सन्नत्राद्धापणश्चैत, गुरुदेवाद्विजाप्रियाः । दयालवो विनीताश्च, बोधवन्तो जितेन्द्रियाः ॥१॥" इत्याद्यभिधानात् ॥१३॥

कस्य पुनरयमभ्यासः शुद्धो भवतीत्याह—

अविराधनया यतते यस्तस्यायमिह सिद्धिमुपयाति। गुरुविनयः श्रुतगर्भो मूलं चास्या अपि ज्ञेयः॥१४॥

सिद्धान्तकथा सत्सङ्गमश्च मृत्युपरिभावनं चैव । दुष्कृतसुकृतविपाकालोचनमथ मूलमस्यापि ॥ १५ ॥

एतस्मिन् खलु यत्नो विदुषा सम्यक् सदैव कर्त्तव्यः । आमूलमिदं परमं सर्व्वस्य हि योगमार्गस्य॥१६॥

विराधना--अपराधासेवनं तन्निषेधादविराधनया हेतुभूतया यतते-प्रयत्नं विधत्ते यः-पुरुषस्तस्य प्रयतमानस्यायं-अभ्यास इह-प्रस्तुते सिद्धिमुपयाति-सिद्धिभाग्भवति, गुरुविनयः-प्रागुक्तः श्रुतगर्भः-आगमगर्भो मूलं च कारणं चास्या अपि-अविराधनाया ज्ञेयो-ज्ञातव्यः ॥ १४ ॥ गुरुविनयस्य किं मूलमित्याह—सिद्धान्तकथा-स्वसमयकथा सत्सङ्गमश्च-सत्पुरुषसंपर्कश्च मृत्यु-परिभावनं चैव-अवश्यभावी मृत्युरिति, यथोक्तं "नरेन्द्रचन्द्रेन्द्रदिवाकरेषु, तिर्यङ्मनुष्यामरनारकेषु । मुनीन्द्रविद्याधरकिन्नरेषु, स्वच्छन्दलीलाचरितो हि मृत्युः ॥१॥" दुष्कृतानां-पापानां सुकृतानां-च पुण्यानां विपाकः-अनुभावस्तदालोचनं-तद्विचारणं हेतुफलभावद्वारेण अथान्तर मूलं-कारणं अस्यापि—गुरुविनयस्य, सर्व्वमेतत्समुदितम् ॥ १५ ॥ अधुना गुरुविनयसहितस्य प्रतिपादितमूलस्यादेयतामुपदर्शयन्निदमाह--एतस्मिन् खलु--एतस्मिन्नेव प्रागुक्ते सिद्धान्तकथादौ यत्नः-आदरो विदुषा-विचक्षणेन

सम्यक् यत्नः सदैव–सर्वकालमेव कर्त्तव्यो–विधेयः आमूलं–अभिव्याप्त्या कारणमिदं सिद्धान्तकथादि परमं–प्रधानं सर्वस्य हि योगमार्गस्य–सकलस्य योगवर्त्मनो यतो वर्त्तते ॥ १६ ॥ १३ ॥ इति त्रयोदशं षोडशकम् ॥

## ॥ अथ चतुर्दशं षोडशकम् ॥

'आमूलमिदं योगमार्गस्ये'त्युक्त, तत्र कतिविधो योग इत्याह—

सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः । जिनरूपध्यानं खल्वाद्यस्तत्तत्त्वगस्त्वपरः ॥ १ ॥

सह आलम्बनेन–चक्षुरादिज्ञानविषयेण प्रतिमादिना वर्त्तत इति सालम्बनो निरालम्बनश्चालम्बनाद् विषयभावप्रतिपत्तिरूपा॰ न्निष्क्रान्तो निरालम्बनो, यो हि छद्मस्थेन ध्यायते, न च स्वरूपेण दृश्यते, तद्विषयो निरालम्बन इतियावत् योगो–ध्यानविशेषः परः–प्रधानो द्विधा ज्ञेयो-द्विविधो वेदितव्यः। जिनरूपस्य–समवसरणस्थितस्य ध्यानं-चिन्तनं खलुशब्दो वाक्यालङ्कारे आद्यः- प्रथमः सालम्बनो योगः, तस्यैव–जिनस्य तत्त्वं–केवलजीवप्रदेशसङ्घातरूपं केवलज्ञानादिस्वभावं तस्मिन् गच्छतीति तत्त्वगः, तुरेवकारार्थः, परोऽनालम्बनः, मुक्तपरमात्मस्वरूपध्यानमित्यर्थः ॥ १ ॥ कथं पुनः जिनरूपं ध्यातव्यमित्याह—

अष्टपृथग्जनचित्तत्यागाद्योगिकुलचित्तयोगेन । जिनरूपं ध्यातव्यं योगविधावन्यथा दोषः ॥ २ ॥

अष्ट च तानि पृथग्जनचित्तानि च तेषां त्यागात्–परिहारात् योगिकुलस्य चित्तं–मनस्तद्योगेन-तत्संबन्धिना जिनरूपं- परमात्मरूपं ध्यातव्यं–ध्येयं योगविधौ–योगविधानेऽन्यथा दोषः–अपराधः ॥ २ ॥ तान्येव चाष्टौ चित्तान्याह—

खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासङ्गैः । युक्तानि हि चित्तानि प्रबन्धतो वर्जयेन्मतिमान् ॥ ३ ॥
खेदे दार्ढ्याभावान्न प्रणिधानमिह सुन्दरं भवति । एतच्चेह प्रवरं कृषिकर्मणि सलिलवज्ज्ञेयम् ॥ ४ ॥
उद्वेगे विद्वेषाद्विष्टिसमं करणमस्य पापेन । योगिकुलजन्मबाधकमलमेतत्ताद्विदामिष्टम् ॥ ५ ॥
क्षेपेऽपि चाप्रबन्धादिष्टफलसमृद्धये न जात्वेतत् । नासकृदुत्पाटनतः शालिरपि फलावहः पुंसः ॥ ६ ॥
उत्थाने निर्वेदात् करणमकरणोदयं सदैवास्य । अत्यागत्यागोचितमेतत्तु स्वसमयेऽपि मतम् ॥ ७ ॥
भ्रान्तौ विभ्रमयोगान्न हि संस्कारः कृतेतरादिगतः । तदभावे तत्करणं प्रक्रान्तविरोध्यानिष्टफलम् ॥८॥
अन्यमुदि तत्र रागात् तदनादरताऽर्थतो महापाया । सर्वानर्थनिमित्तं मुद्विषयाङ्गारवृष्ट्याभा ॥ ९ ॥
रुजि निजजात्युच्छेदात् करणमपि हि नेष्टसिद्धये नियमात् । अस्येत्यननुष्ठानं तेनैतद्वन्ध्यफलमेव ॥१०॥
आसङ्गेऽप्यविधानादसङ्गसक्त्युचितमित्यफलमेतत् । भवतीष्टफलदमुच्चैस्तदप्यसङ्ग यतः परमम् ॥११॥

खेदः—श्रान्तता क्रियास्वप्रवृत्तिहेतुः पथिपरिश्रान्तवत् खेदाभावेऽप्युद्वेगः—स्थानस्थितस्यैव उद्विग्नता, कुर्वाणोऽप्युद्विग्नः करोति

---

१ खेदः—पथिपरिश्रान्तवत्पूर्वक्रियाप्रवृत्तिजनितमुत्तरक्रियाप्रवृत्तिप्रतिबन्धकं दुःखं । २ उद्वेगः कष्टसाध्यताज्ञानजनितमालस्यं यद्वशारकायखेदाभावेऽपि स्थानस्थितस्यैव क्रियां कर्तुमनुत्साहो जायते, कुर्वाणोऽपि ततो न सुखं लभत इति

न सुखं लभते क्षेपः-क्षिप्तचित्तता अन्तराऽन्तराऽन्यत्र न्यस्तचित्तवत् उत्थानं-चित्तस्याप्रशान्तवाहिता मनःप्रभृतीनामुद्रेकात् मदावष्टब्धपुरुषवत् भ्रान्तिः-अतस्मिँस्तद्ग्रहरूपा शुक्तिकायां रजताध्यारोपवत् अन्यमुद्-अन्यहर्षः रुग्--रोगः पीडा भङ्गो वा आसङ्गः-अभिष्वङ्गः। खेदश्चोद्वेगश्च क्षेपश्चोत्थानं च भ्रान्तिश्चान्यमुच्च रुक्चासङ्गश्च तैर्युक्तानि हि-संबद्धानि हि चित्तानि-प्रस्तुतान्यष्ट प्रयत्नतः-प्रयत्नेन वर्जयेत्-परिहरेत् मतिमान्-बुद्धिमान् ॥ ३ ॥ खेदादींश्चित्तदोषान् फलद्वारेणोपदर्शयन्नाह—खेदे चित्तदोषे सति दार्ढ्याभावात्--दृढत्वाभावात् न प्रणिधानम् ऐकाग्र्यं इह प्रस्तुते योगे सुन्दरं भवति, एतच्च-प्रणिधानं इह-योगे प्रवरं-प्रधानं कृषिकर्मणि-धान्यनिष्पत्तिफले सलिलवद्-जलवज्ज्ञेयम्॥४॥उद्वेगे-चित्तदोषे विद्वेषाद्योगविषयतो विष्टिसमं-राजविष्टिकल्पं करणमस्य योगस्य पापेन- हेतुभूतेन, एतच्चैवंविधं करणं योगिनां कुले यज्जन्म तस्य बाधकं, अनेन योगिकुलजन्मापि जन्मान्तरे न लभ्यत इतिकृत्वा योगिकुलजन्मबाधकं, अलं-अत्यर्थमेतत्तद्विदामिष्टं-योगविदामभिमतम् ॥ ५ ॥ क्षेपेऽपि च चित्तदोषेऽप्रबन्धात्-प्रबन्धत्वाभावाच्चित्तस्य इष्टफलसमृद्धये-विवक्षितफलसमृद्ध्यर्थं योगनिष्पत्तये न जातु--कदाचित् करणं-चित्तं भवति, किमित्यन्यत्रान्यत्र चित्तप्रक्षेपे फलसमृद्धिर्न भवतीत्याह--नासकृद्-अनेकशः उत्पाटनाद्--उत्खननाच्छालिरपि-धान्यविशेषः फलावहः-फलसंयुक्तः पुंसः-पुरुषस्य यतो भवति ॥६॥ उत्थाने-चित्तदोषे सत्यप्रशान्तवाहितायां निर्वेदाद्धेतोः करणं-निष्पादनमकरणोदयं--भाविकालमाश्रित्याकरणस्यैवोदयो यस्मिन्निति तत्तथा सदैवास्य--योगस्य, न विद्यते त्यागो यस्य कथञ्चिदुपादेयत्वात्तदत्यागं त्यागायोचितं-योग्यमप्रशान्तवाहितादोषात् अत्यागं च तत्त्यागोचितं च अत्यागत्यागोचितमेवमेतत्तु-

१ अत्यागमशक्यत्याग बाह्यप्रतिज्ञाभङ्गस्य लोकापवादहेतुत्वात्तस्य च दु.महत्वात्

एतत्पुनः करणमभिसम्बध्यते स्वसमयेऽपि-स्वसिद्धान्तेऽपि मतमिष्टम्[1] ॥ ७ ॥ भ्रान्तौ चित्तदोषे सति विभ्रमयोगात्-मनोविभ्रमसम्बधात् न हि संस्कारो-नैव वासनाविशेषः कृतेतरादिगतः-इदं मया कृतमितरदकृतं आदिशब्दादिद मयोच्चरितमिदमनुचरितं एतद्गतः—एतद्विषयः, न हि मनोविभ्रमे कृतेतरादिसंस्कारो भवति, तदभावे-संस्काराभावे तत्करणं-तस्य प्रस्तुतस्य योगस्य करणं प्रक्रान्तविरोधि-प्रस्तुतयोगविरोध्यनिष्टफलम्-इष्टफलरहितम्[2] ॥ ८ ॥ अनुष्ठीयमानादन्यत्र मुत-प्रमोदस्तस्यां सत्यां चित्तदोषरूपायां तत्र-अन्यस्मिन् रागाद्-अभिलाषातिरेकात्तदनादरता-अनुष्ठीयमानाऽनादरभावोऽर्थतः-सामर्थ्यात् महापाया-महानपायो यस्याः सकाशात्सा तथा, सर्वानर्थनिमित्तं-सर्वेषामनर्थानां हेतुः, तदनादरताऽभिसम्बध्यते, मुद्विषयाङ्गारवृष्ट्याभा-मुदो-हर्षस्य विषयो यस्तस्मिन्नङ्गारवृष्ट्याभा—अङ्गारवृष्टिप्रतिच्छायाऽङ्गारवृष्टिसदृशी,[3] प्रमोदविषयार्थोपघातकारिणीत्यर्थः, इयं चान्यमुत् सुन्दरेष्वपि शास्त्रोक्तेषु चैत्यवन्दनास्वाध्यायकरणादिषु श्रुतानुरागाच्चैत्यवन्दनाद्यनाद्रियमाणस्य तत्करणवेलायामपि तदुपयोगाभावेनेतरनासक्तचित्तवृत्तेः सदोषा, न हि शास्त्रोक्तयोरनुष्ठानयोरयं विशेषः समस्ति यदुतैकमादरविषयोऽन्यदनादरविषय

१ अत एव गृहीतदीक्षस्य सर्वथा मूलोत्तरगुणनिर्वहणाभावे विधिना सुश्रावकाचारग्रहणमुपदर्श्यते, अत्यागः कथंचिदुपादेयत्वात् त्यागोचित च सदोषत्वादिति व्याख्यायां तु भावविशेषकृतगुणदोषतुल्यभावो द्रष्टव्य, इत्थमेव सविभ्रमपाक्षिकादिव्यवस्थासिद्धेरिति दिग् २ कृतेतरादिसङ्कलनसहितक्रियाया एवेष्टफलहेतुत्वात् । अथ यथोपेक्षयैव कृताकृतसंस्काराभावो न तु भ्रान्त्या तत्र, कोऽयं दोष इति चेत्र भ्रान्तेरपेक्षाया अप्युपलक्षणत्वात् ३ तेनातोऽपि विहितानुष्ठानानादरस्य दुरन्तससारहेतुत्वात् ४ अकालरागस्य तत्फलोपघातकत्वादितिभाव । इय चान्यमुत्सुन्दरेष्वपि शास्त्रोक्तेषु चैत्यवन्दनस्वाध्यायादिषु श्रुतानुरागाच्चैत्यवन्दनादिकरणवेलायामपि तदनादियमाणस्य तदुपयोगाभावेनेतरासक्तचित्तवृत्ते सदोषा । नहि शास्त्रोक्तयोरनुष्ठानयोरय विशेषोऽस्ति यदेकमादरणीयमन्यत्तु नेति

इति ॥ ९ ॥ रुजि–रोगे चित्तदोषे सति निजजात्युच्छेदात्–स्वकीयसामान्योच्छेदात्, सम्यगनुष्ठानजात्युच्छेदादिति, कोऽर्थः ?, कर्णमपि हि नेष्टसिद्धये–नाभिमतफलनिष्पत्तये नियमात्-नियमेन अस्य–प्रस्तुतस्यार्थस्य इत्यननुष्ठानम्–इतिहेतोरननुष्ठानं अकरणं तेन–कारणेनैतत् करणं वन्ध्यफलमेवेष्टफलाभावात् । इयं हि रुग् भङ्गरूपा पीडारूपा वाऽनुष्ठानजातेरुच्छेदकरणद्वारेण सर्वानुष्ठानानां वन्ध्यफलत्वापादनाय प्रभवति तेन सदोषा विवेकिना परिहर्त्तव्येति दर्शिता[1] ॥ १० ॥ आसङ्गेऽपि चित्तदोषे सति विधीयमानानुष्ठाने इदमेव सुन्दरमित्येवंरूपे अविधानात्-शास्त्रोक्तविधेरभावात् सक्तिः–अनवरतप्रवृत्तिः न विद्यते सङ्गो यस्यां सेयमसङ्गा–अभिष्वङ्गाभाववती असङ्गा चासौ सक्तिश्च तया उचितं–योग्यमितिकृत्वाऽफलमेतद्–इष्टफलरहितमेतदनुष्ठानं भवति-जायते, इष्टफलदम्–इष्टफलसम्पादकं उच्चैः-अत्यर्थं तदपि-शास्त्रोक्तमनुष्ठानं असङ्गम्-अभिष्वङ्गरहित यतो–यस्मात् परमं–प्रधानं, आसङ्गयुक्तं ह्यनुष्ठानं तन्मात्रगुणस्थानकस्थितिकार्येव, न मोहोन्मूलनद्वारेण केवलज्ञानोत्पत्तये प्रभवति, तस्मात्तदर्थिना आसङ्गस्य दोषरूपता विज्ञेयेति ॥ ११ ॥ एवमष्टपृथग्जनचित्तदोषान् प्रतिपाद्य तत्त्यागद्वारेण योगिचित्तमुपदर्शयन्नाह—

**एतद्दोषविमुक्तं शान्तोदात्तादिभावसंयुक्तम् । सततं परार्थनियतं सङ्क्लेशविवर्जितं चैव ॥ १२ ॥**

**सुखप्रदर्शनपरं समुल्लसद्गुणगणौघमत्यन्तम् । कल्पतरुबीजकल्पं शुभोदयं योगिनां चित्तम् ॥ १३ ॥**

एतद्दोषविमुक्तं–अष्टचित्तदोषवियुक्तं 'शान्तोदात्तादिभावसंयुक्तं' शान्तः–उपशमवान्, यथोक्तम् "न यत्र दुःखं न सुखं

1 अथ भङ्गरूपाया पीडारूपाया वा रुज शक्तौ सत्यामपरिहार. पुरुषस्य स्वतन्त्र दोषान्तरं, तत्र व्यापृतानामनुष्ठानानां तु कोऽपराध इति चेन्न, यदनुष्ठानव्यासङ्गेन पुरुषस्य रुक्परिहारोपायानुपयोगस्तत्र रुग्दोषस्य न्यायप्राप्तत्वात्

न रोगो, न द्वेषमोहौ न च काचिदिच्छा । रसः स शान्तो विहितो मुनीनां, सर्वेषु भावेषु समः प्रदिष्टः ॥१॥" उदात्तः-उदारो, यतः उक्तम्-"अयं निजः परो वेति, गणना लघुचेतसाम् । उदारचरितानां तु, वसुधैव कुटुम्बकम् ॥ १ ॥" आदिशब्दाद्गम्भीरधीरादिभावपरिग्रहः, तैः संयुक्तं-समन्वितं सततं-अनवरतं परार्थनियतं-परोपकारनियतवृत्ति सङ्क्लेशविवर्जितं चैव—सङ्क्लेशो विशुद्धिप्रतिपक्षः कालुष्यं तेन विरहितं चैव ॥ १२ ॥ 'सुस्वप्नदर्शनपरं' शोभनाः स्वप्नाः सुस्वप्नाः श्वेतसुरभिपुष्पवस्त्रातपत्रचामरादयस्तद्दर्शनप्रवृत्तं समुल्लसन् गुणगणौघो-गुणनिकरप्रवाहो यस्मिंस्तत् समुल्लसद्गुणगणौघम् अत्यन्तम्-अतिशयेन 'कल्पतरुबीजकल्पं' कल्पतरोर्बीजं-स्वजनकं कारणं तेन तुल्यं शुभोदयं योगिनां चित्तं, शुभ उदयोऽस्येति शुभोदयम् ॥ १३ ॥ कस्य पुनरेवंविधं विशेषेण योगिनश्चित्तं भवतीत्याह—

एवंविधमिह चित्तं भवति प्रायः प्रवृत्तचक्रस्य । ध्यानमपि शस्तमस्य त्वधिकृतमित्याहुराचार्याः ॥१४॥

एवंविधम्-एवंस्वरूपमिह-प्रक्रमे चित्तं-मनो भवति-सम्भवति प्रायो-बाहुल्येन प्रवृत्तचक्रस्य-प्रवृत्तरात्रिन्दिवानुष्ठानसमूहस्य योगिनो, ध्यानमपि-पूर्वोक्तस्वरूपं शस्तं-प्रशस्तं अस्य तु-अस्यैव अधिकृतं-प्रस्तुतमित्याहुराचार्याः-सूरयो ब्रुवते ॥१४॥ कथं पुनस्तद् ध्यानं देशाद्यपेक्षया भवतीत्याह—

शुद्धे विविक्तदेशे सम्यक्संयमितकाययोगस्य । कायोत्सर्गेण दृढं यद्वा पर्यङ्कबन्धेन ॥ १५ ॥

साध्वागमानुसाराच्चेतो विन्यस्य भगवति विशुद्धम् । स्पर्शावेधात्तत्सिद्धयोगिसंस्मरणयोगेन ॥१६॥१४॥

शुद्धे-शुचौ विविक्तदेशे-जनाकीर्णादिरहिते सम्यग्-अवैपरीत्येन संयमितकाययोगस्य-नियमितसर्व्वकायचेष्टस्य कायोत्सर्गेण-ऊर्ध्वस्थानरूपेण दृढं-अत्यर्थं, यद्वा पर्यङ्कबन्धेन आसनविशेषरूपेण दृढं-अत्यर्थं, ॥ १५ ॥ साधु यथा भवत्येवमागमानुसारात्—सिद्धान्तानुसारेण चेतः-चित्तं विन्यस्य-निक्षिप्य भगवति-जिने विशुद्धं-विशुद्धिमत् स्पर्शः-तत्त्वज्ञानं तस्यावेधात्-संस्कारात् तस्मिन् ध्याने सिद्धाः-प्रतिष्ठिता लब्धात्मलाभा ये योगिनस्तेषां संस्मरणयोगः-स्मरणव्यापारस्तेन, यो हि यत्र कर्म्मणि सिद्धस्तदनुसरणं तत्रेष्टफलसिद्धये भवति ॥ १६ ॥ १४ ॥ इति चतुर्दशं षोडशकम् ॥

## अथ पञ्चदशं षोडशकम् ॥

किं पुनस्तत्र ध्याने ध्येयमित्याह—

सर्वजगद्धितमनुपममतिशयसन्दोहमृद्धिसंयुक्तम् । ध्येयं जिनेन्द्ररूपं सदासि गदत्तत्परं चैव ॥ १ ॥
सिंहासनोपविष्टं छत्रत्रयकल्पपादपस्याधः । सत्त्वार्थसम्प्रवृत्तं देशनया कान्तमत्यन्तम् ॥ २ ॥
आधीनां परमौषधमव्याहतमखिलसम्पदां बीजम् । चक्रादिलक्षणयुतं सर्वोत्तमपुण्यनिर्म्माणम् ॥३॥
निर्वाणसाधनं भुवि भव्यानामग्र्यमतुलमाहात्म्यम् । सुरसिद्धयोगिवन्द्यं वरेण्यशब्दाभिधेयं च ॥ ४ ॥

सर्वजगत् प्राणिलोकोऽभिधीयते तस्मै हितं, हितकारित्वं च सदुपदेशनात्, न विद्यते उपमा शरीरसन्निवेशसौन्दर्यादिभिर्गुणैर्यस्य तदनुपमं अतिशयान् सन्दोग्धि—प्रपूरयति यत्तदतिशयसन्दोहं यद्वा अतिशयसमूहसम्पन्नमितियावत् ऋद्धिसंयुक्तं ऋद्धयो—नानाप्रकारा आमर्षौषध्यादयो लब्धयस्ताभिः संयुक्तं—समन्वितं ध्येय—ध्यातव्यं जिनेन्द्ररूपं—जिनेन्द्रस्वरूपं सदसि—सभायां समवसरणे गदद्—व्याकुर्वाणं सर्व्वसत्त्वस्वभाषापरिणामिन्या भाषया, तत्परं चैव—तस्मादुक्तलक्षणाज्जिनेन्द्ररूपात् परं—मुक्तिस्थं धर्म्मकायावस्थान्तरभावि तत्त्वकायावस्थाभाव चैव ध्येयं भवति ॥ १ ॥ तत्राद्यं जिनेन्द्ररूपमधिकृत्य कीदृश तद् ध्येयमित्याह—सिंहोपलक्षितमासनं सिंहासनं देवनिर्मितं तत्रोपविष्टं, सिंहस्य—मृगाधिपतेरासनं—अवस्थानविशेषरूपमूर्जितं अनाकुलं च तेनोपविष्टमिति वा, आतपं छादयतीति च्छत्र तेषां त्रयमुपर्युपरिष्टात् कल्पपादपः—कल्पद्रुमः, छत्रत्रयं च कल्पपादपश्च तस्याधः—अधस्तात् सत्त्वाः—प्राणिनस्तेषाम् अर्थः—उपकारस्तस्मिन् सम्यक् प्रवृत्तं—स्वगतपरिश्रमपरिहारेण देशनया—धर्म्मकथया कान्तं—कमनीयं मनोज्ञं अत्यन्तं—अतिशयेन ध्येयमिति सम्बन्धः ॥ २ ॥ पुनरपि कीदृक् तद्रूपमित्याह— आधीनां—शारीरमानसानां पीडाविशेषाणां परमौषधं—प्रधानौषधरूपं, तदपनेतृत्वेन, अव्याहतं—अनुपहतम् अखिलसम्पदां—सर्व्वसम्पत्तीनां बीजं—कारणं चक्रादीनि यानि लक्षणानि—चक्रस्वस्तिककमलकुलिशादीनि तैर्युतं—समन्वितं, सर्व्वोत्तमं च तत्पुण्यं च निर्म्मीयते अनेनेति निर्म्माणं सर्वोत्तमं पुण्यनिर्म्माणं यस्येति, सर्व्वोत्तमपुण्यनिर्म्मितमित्यर्थः[1] ॥ ३ ॥ तदेव विशिनष्टि—निर्व्वाणसाधनं—परमपदप्रापकं सुखसाधन

---

1 सर्वातिशायिशान्तरूपपरमाणुनिर्मितमित्यर्थं

या भुवि-पृथिव्यां भव्यानां-योग्यानां अग्र्यं-प्रधानं अतुलमाहात्म्यं-असाधारणप्रभावं सुराः-देवाः सिद्धाः-विद्यामन्त्रसिद्धादयो योगिनो-योगबलसम्पन्नास्तैर्वन्द्यं-वन्दनीयं स्तुत्यं, वरेण्यशब्देनाभिधेयं-वाच्यं, वरेण्यशब्दाभिधेयं च जिनेन्द्ररूपं ध्येयमित्यभिसम्बध्यते ॥ ४ ॥ एवमाद्यं सालम्बनध्यानमभिधाय तत्फलमभिधित्सुराह—

परिणत एतस्मिन् सति सद्ध्याने क्षीणकिल्बिषो जीवः। निर्वाणपदासन्नः शुक्लाभोगो विगतमोहः ॥५॥
चरमावञ्चकयोगात् प्रातिभसञ्जाततत्त्वसंदृष्टिः । इदमपरं तत्त्वं तद्वशतस्त्वस्त्यतोऽप्यन्यत् ॥ ६ ॥

परिणते—सात्मीभूते एतस्मिन् सति-प्रस्तुते सद्ध्याने-शोभनध्याने क्षीणकिल्बिषः--क्षीणपापो जीव-आत्मा निर्वाणपदस्यासन्नः-प्रत्यासत्तिमान् शुक्लाभोगः-शुक्लज्ञानोपयोगो विगतमोहः--अपगतमोहनीयः ॥५॥ चरमावञ्चकयोगात्-फलावञ्चकयोगात् प्रागुक्तात् प्रतिभा-मतिस्तत्र भवं प्रातिभं तेन सञ्जाता तत्त्वसंदृष्टिः-तत्त्वदर्शनं यस्य स प्रातिभसञ्जाततत्त्वसंदृष्टिः, परिणत एतस्मिन् भवतीत्यवसेयम्, इदमिति प्रत्यक्षीकृतं सालम्बनध्यानद्वारेण जिनेन्द्ररूपं अपरं-अर्वाग्भागवर्ति परस्मादन्यत् तत्त्वं-परमार्थरूपं ध्येय तद्वर्तते यद्वशतस्तु-यद्वशादेव यत्सामर्थ्यादपरतत्त्वसामर्थ्यादित्यर्थः अस्ति-भवत्यतोऽपि-अपरतत्त्वादन्यत्-परतत्त्वं-मुक्तिस्थं, इदमुक्तंभवति-सर्व्वस्यापि ध्यानपरस्य योगिनोऽपरतत्त्ववशात् परं तत्त्वमाविर्भवतीति ॥ ६ ॥ कस्मात्पुनः परं तत्त्वमेवं संस्तूयत इत्याह—

तस्मिन् दृष्टे दृष्टं तद् भूतं तत् परं मतं ब्रह्म । तद्योगादस्यापि ह्येषा त्रैलोक्यसुन्दरता ॥ ७ ॥

तस्मिन्–परतत्त्वे सिद्धस्वरूपे दृष्टे–सामुपलब्धे दृष्टं सर्व्वमेव वस्तु भवति, जीवाद्यमूर्त्तवस्त्वालम्बनस्य बोधस्य सर्व्वविषयत्वात्, तद् भूतं—तदेव सिद्धस्वरूपं भूतं–सत्यं, संसारिजीवस्वरूपस्य ज्ञानावरणादिकर्म्मावृतस्य सद्भूततत्त्ववियोगात्, कर्ममलमलिनस्य ह्यात्मनो न भूतं रूपमुपलक्ष्यते, तद्विकारैरुपद्रूयमाणत्वात्, सिद्धस्वरूपस्य तु निरुपद्रवत्त्वाद्भूतमेव स्वरूपं सर्वदा समुपलभ्यते, नेतरत्, तदेव–परमात्मस्वरूपं परं–प्रकृष्ट मतम्–अभिप्रेतं ब्रह्म–महत्, बृहत्तमं न ततोऽन्यदस्ति, तद्योगात्–परतत्त्वयोगात् अस्यापि हि–परतत्त्वविषयध्यानविशेषस्यानालम्बनयोगस्य एषा–लोके लोकोत्तरे च प्रसिद्धा 'त्रैलोक्यसुन्दरता' त्रैलोक्ये–सर्व्वस्मिन्नपि जगति विशेषवस्तुभ्यः सुन्दरता–शोभनता ॥ ७ ॥ कः पुनर्निरालम्बनयोगः ? कियन्तं कालं भवतीत्याह—

सामर्थ्ययोगतो या तत्र दिदृक्षेत्यसङ्गसक्त्याढ्या । साऽनालम्बनयोगः प्रोक्तस्तद्दर्शनं यावत् ॥ ८ ॥
तत्राप्रतिष्ठितोऽयं यतः प्रवृत्तश्च तत्त्वतस्तत्र । सर्वोत्तमानुजः खलु तेनानालम्बनो गीतः ॥ ९ ॥
द्रागस्मात्तद्दर्शनमिषुपातज्ञातमात्रतो ज्ञेयम् । एतच्च केवलं तज् ज्ञानं यत्तत्परं ज्योतिः ॥ १० ॥

सामर्थ्ययोगतः–शास्त्रोक्तत्वात् (तद्व्यतिक्रान्तविषयात्) क्षपकश्रेणीद्वितीयापूर्व्वकरणभाविनः सकाशात्, सामर्थ्ययोगस्वरूपं चेदम्–"शास्त्रसन्दर्शितोपायस्तदतिक्रान्तगोचरः । शक्त्युद्रेकाद्विशेषेण, सामर्थ्याख्योऽयमुत्तमः ॥१॥" । या तत्र–परतत्त्वे द्रष्टुमिच्छा दिदृक्षा इत्येवंस्वरूपाऽसङ्गा चासौ सक्तिश्च–निरभिष्वङ्गाऽनवरतप्रवृत्तिस्तयाऽऽढ्या–परिपूर्णा दिदृक्षा सा–परमात्मविषयदर्शनेच्छा अनालम्बनयोगः प्रोक्तस्तद्वेदिभिः तस्य–परतत्त्वस्य दर्शनं उपलम्भस्तद्यावत्, परमात्मस्वरूपदर्शने तु केवलज्ञानेन अनालम्ब-

नयोगो न भवति, तस्य तदालम्बनत्त्वात् ॥८॥ कथं पुनरनालंबनोऽयमित्याह—तत्र—परतत्त्वेऽप्रतिष्ठितः—अलब्धप्रतिष्ठः अयम्-अनालम्बनो, यतो—यस्मात् प्रवृत्तश्च ध्यानरूपेण तत्त्वतो—वस्तुतस्तत्र परतत्त्वे 'सर्वोत्तमानुजः खलु' सर्वोत्तमस्य योगस्यानुजः-प्रागनन्तरवर्ती तेन—कारणेनानालम्बनो गीतः—कथितः[1] ॥ ९ ॥ किं पुनरनालम्बनाद्भवतीत्याह—द्राक्—शीघ्रं अस्मात्—प्रस्तुतादनालम्बनात्तद्दर्शनं-परतत्त्वदर्शनमिषोः पातस्तद्विषयं ज्ञातम्-उदाहरणं तन्मात्रादिषुपातज्ञातमात्रतो ज्ञेयं—दर्शनम्, एतच्च-परतत्त्वदर्शनं केवलं—सम्पूर्णं तदिति—तत् प्रसिद्धं ज्ञानं, केवलज्ञानमित्यर्थः, यत्—केवलज्ञानं परं—प्रकृष्टं ज्योतिः—प्रकाशरूपम् । इषुपातोदाहरणं च यथा केनचिद्धनुर्द्धरेण लक्ष्याभिमुखे बाणे तदविसंवादिनि प्रकल्पिते यावत्तस्य बाणस्य न विमोचनं तावत्तत्प्रगुणतामात्रेण तदविसंवादित्वेन च समानोऽनालम्बनो योगो, यदा तु तस्य बाणस्य विमोचनं लक्ष्याविसंवादिपतनमात्रादेव लक्ष्यवेधकं तदा आलंबनोत्तरकालभावी तत्पातकल्पः सालम्बनः केवलज्ञानप्रकाश इत्यनयोः साधर्म्यमङ्गीकृत्य निदर्शनम्[2] ॥१०॥ कीदृशं पुनस्तत्केवलज्ञानमित्याह—

आत्मस्थं त्रैलोक्यप्रकाशकं निष्क्रियं परानन्दम् । तीतादिपरिच्छेदकमलं ध्रुवं चेति समयज्ञाः ॥ ११ ॥

एतद्योगफलं तत्परापरं दृश्यते परमनेन । तत्तत्त्वं यद् दृष्ट्वा निवर्तते दर्शनाकाङ्क्षा ॥ १२ ॥

तनुकरणादिविरहितं तच्चाचिन्त्यगुणसमुदयं सूक्ष्मम् । त्रैलोक्यमस्तकस्थं निवृत्तजन्मादिसङ्क्लेशम् ॥१३॥

---

१ स्यादेतत् परतत्त्वदिदृक्षाया अप्यपरतत्त्वदर्शनं यावदनालम्बनत्वापत्तिः, अपरतत्त्वस्य दृष्टत्वाभ्युपगमे च ध्यानानुपपत्तिरिति, मैवं, अपरतत्त्वे प्रतिमाद्यालम्बनद्वारा सामान्यतो दृष्टेऽपि विशेषदर्शनाय ध्यानोपपत्तेः, परम्परयाऽऽलम्बनवशेन च सालम्बनत्वव्यपदेशात्, परतत्त्वे तु केनापि द्वारेण दर्शनाभावादनालम्बनतोपपत्तेः २ एव यदाऽनालम्बनध्यानमोचनं ध्यानान्तरिकायां तदैव परतत्त्ववेधकल्पः केवलप्रकाश इति

ज्योतिः परं परस्तात्तमसो यद्गीयते महामुनिभिः । आदित्यवर्णममलं ब्रह्माद्यैरक्षरं ब्रह्म ॥ १४ ॥
नित्यं प्रकृतिवियुक्तं लोकालोकावलोकनाभोगम् । स्तिमिततरङ्गोदधिसममवर्णमस्पर्शमगुरुलघु ॥ १५ ॥
सर्वाबाधारहितं परमानन्दसुखसङ्गतमसङ्गम् । निःशेषकलातीतं सदाशिवाद्यादिपदवाच्यम् ॥१६॥१५॥

आत्मनि तिष्ठतीत्यात्मस्थं-जीवस्थं सत् त्रैलोक्यस्य-त्रिलोकीव्यवस्थितस्य ज्ञेयस्य जीवाजीवरूपस्य प्रकाशकं-अवबोधकमात्मनः परेषां च पदार्थानां स्वरूपज्ञापकं वा निष्क्रियं-गमनादिक्रियारहितं, पर आनन्दोऽस्मिन्निति परानन्दम्, पाठान्तरं वा परानन्द्यं-परैरानंद्यं-अभिनन्दनीयं तत्प्राप्त्यर्थिभिः श्लाघनीयं रोचनीयमितियावत्, तीतादिपरिच्छेदकम्-अतीतशब्दस्यार्थे तीतशब्दो वर्त्तते, सिद्धिविनिश्चयादिग्रन्थेषु दर्शनात्, इतादिपरिच्छेदकं वा, इतं-गतमतिक्रान्तं, अतीतवर्त्तमानानागतानां कालत्रयविषयाणां पदार्थानां परिच्छेदकं-परिच्छेत्तृ ज्ञानस्वभावमल-समर्थं ध्रुवं चेति-शाश्वतं चेति समयज्ञाः-आगमज्ञाः, इत्थमभिदधाति । कथं पुनरतीतादिपरिच्छेदकत्वं केवलज्ञानस्य? यावताऽतीतानागतयोर्विचार्यमाणयोर्वस्तुत्वमेव न घटां प्राञ्चति, विनष्टानुत्पन्नत्वेनासत्त्वाद्, असतश्च ज्ञानविषयत्वनिरोधादिति, अत्रोच्यते, न वर्त्तमानकालविषयैकपर्यायप्रतिबद्धस्वभावं वस्तु, तस्य क्षणमात्रवर्त्तित्वाद्, वस्तुनस्तु सकलातीतानागताद्यनन्तपर्यायराशिसमनुगतैकाकाररूपत्वात्, तत्र च वर्त्तमानपर्यायवत्स्वलक्षणभाविनामतीतानागतपर्यायाणामपि प्रमाणेनोपलब्धेर्वस्तुसत्त्वाद्, अन्यथा स्मृत्यादिज्ञानविषयत्वमतीतादिपर्यायाणां न भवेत्, दृश्यते च, तस्मात्तेऽपि वस्तुमन्तः, तैर्विना वस्तुन एकाखण्डरूपस्यासम्भवात्, तस्मात्तेषां सद्रूपत्वात्तद्विषयं ज्ञानं परिच्छेत्तृत्वेन सम्भवतीति निरवद्यम् ॥ ११ ॥ एवं केवलज्ञान-

स्वरूपमभिधाय परतत्त्वयोजनायाह—एतत् प्रस्तुतं केवलज्ञानं तद्योगफलं परापरं-परयोगस्यापरयोगस्य च फलभूतं, नान्यद्, दृश्यते-समुपलभ्यते साक्षात् परमनेन केवलज्ञानेन तत्तत्त्वं-परमात्मस्वरूपं यद् दृष्ट्वा-यत्सिद्धस्वरूपमुपलभ्य निवर्त्तते-व्यावर्त्तते दर्शनाकाङ्क्षा-दर्शनवाञ्छा, सर्वस्य वस्तुनो दृष्टत्वात् ॥१२॥ अधुना परतत्त्वमेव स्वरूपेण निरूपयन्निदमाह कारिकाचतुष्टयेन-तनुः-शरीरं करणं द्विधा-अन्तःकरणं बहिष्करणं च, अन्तःकरणं-मनो बहिष्करणं-पञ्चेन्द्रियाणि, आदिशब्दाद् योगाध्यवसायस्थानपरिग्रहस्तैर्विरहितं-वियुक्तं, तच्च-परं तत्त्वमचिन्त्यो गुणसमुदयो-ज्ञानादिसमुदयो यस्य तदचिन्त्यगुणसमुदयं सूक्ष्मं-सूक्ष्मस्वभावमदृश्यत्वात् केवलविरहेण त्रैलोक्यस्य मस्तकं-सर्वोपरिवर्ती सिद्धिक्षेत्रविभागस्तस्मिंस्तिष्ठतीति त्रैलोक्यमस्तकस्थं निवृत्ता जन्मादयः सङ्क्लेशा यस्मात्तन्निवृत्तजन्मादिसङ्क्लेशम् ॥ १३ ॥ ज्योतिः-प्रकाशस्वभावं परं-प्रधानं परस्तात्तमसो—द्रव्यभावरूपादन्धकारात् यद्गीयते-यत्संशब्द्यते महामुनिभिः-ज्ञानसम्पन्नैः आदित्यवर्णममलं—निदर्शनमात्राङ्गीकरणेन भास्वररूपं, न पुनः परमार्थतस्तस्य पुद्गलात्मकः परिणामोऽस्ति, ब्रह्माद्यैरितिविशेष्यपदं महामुनिभिरित्यनेनाभिसंबध्यते, न क्षरतीत्यक्षरं-स्वभावात्कदाचिन्न प्रच्यवत इतिकृत्वाऽक्षरं परं तत्त्वम् तथा ब्रह्म-महत्, "बृहत्त्वाद् बृंहकत्वाच्च, ब्रह्मेति परिकीर्त्तित"मित्यभिधानाद्, अथवाऽक्षरं ब्रह्म तत् परं तत्त्वम् ॥ १४ ॥ नित्यं-ध्रुवं प्रकृतिवियुक्तं-स्वतन्त्रपरिभाषया सकलज्ञानावरणीयादिमूलोत्तरभेदप्रकृतिवियुक्तं, परतन्त्रपरिभाषया सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरित्यनया वियुक्तं, सांसारिकसर्व्वप्रकारैर्वा, लोकालोकयोः-समयप्रसिद्धयोरवलोकन आभोग-उपयोगोऽस्येति लोकालोकावलोकनाभोगं, स्तिमिततरङ्गश्चासावुदधिश्च तेन समं निस्तरङ्गमहोदधिकल्पं, न विद्यते वर्णः-पञ्चविधः सितादिरस्येत्यवर्णं, न विद्यते स्पर्शोऽष्टप्रकारो मृदुकर्कशादिरस्येत्यस्पर्शं, न विद्यते गुरुलघूनि यस्मिंस्तत्तथाऽगुरु-

गुपरिणामोपेतं, अमूर्तत्वं यस्मादगुरुलघु परं तत्त्वम् ॥१५॥ सर्वाबाधारहितं-शारीरमानसाबाधाविमुक्तम्, परम आनन्दो यस्मिन् सुखे तेन सङ्गतं-युक्तं, अनेन परपरिकल्पितनिःसुखदुःखमोक्षव्यवच्छेदमाह, न विद्यते सङ्गो यस्मिन्नित्यसङ्गं-असङ्गतायुक्तं, तल्लक्षणं चेदम्-"भये च हर्षे च मतेरविक्रिया, सुखेऽपि दुःखेऽपि च निर्विकारता । स्तुतौ च निन्दासु च तुल्यशीलता, वदन्ति तां तत्त्वविदो ह्यसङ्गताम् ॥१॥" निःशेषा याः कलास्ताभ्योऽतीतं तथाभव्यत्वाद्यात्मस्वभावभूतांशातिक्रान्तं भव्यत्वासिद्धत्वयोगसहवर्तिक्षायिकचारित्राद्यभावात्, सदा शिवमस्येति सदाशिवं, न हि परतत्त्वमशिवं कदाचिद्भवति, आदौ भवमाद्यं-प्रधानं सन्तत्या अनादिकालमाश्रित्यादिभावेनावस्थितं वा, आदिशब्दान्निरञ्जनादिग्रहः, सदाशिवाद्यादिभिः पदैर्वाच्यं—अभिधेयं परं तत्त्वं सर्वत्राभिसम्बन्धनीयम् ॥ १६ ॥ १५ ॥ इति पञ्चदशं षोडशकम् ॥

## अथ षोडशं षोडशकम् ॥

एवं परतत्त्वमभिधाय तद्दर्शनानन्तरं यद्भवति तदाह—

एतद् दृष्ट्वा तत्त्वं परममनेनैव समरसापत्तिः । सञ्जायतेऽस्य परमा परमानन्द इति यामाहुः ॥ १ ॥
सैषाऽविद्यारहिताऽवस्था परमात्मशब्दवाच्येति । एषैव च विज्ञेया रागादिविवर्जिता तथता ॥ २ ॥

एतत् प्रस्तुतं दृष्ट्वा-अवलोक्य तत्त्वं परमं, परतत्त्वमित्यर्थः, अनेन-एवमुक्तस्वरूपेण समरसापत्तिः-समतापत्तिः सञ्जायते-सम्भवति अस्य द्रष्टुः केवलिनः परमा-प्रधाना, परमानन्द इति यामाहुः-यां समरसापत्तिं परमानन्द इत्यनेन शब्देन ब्रुवते

वेदान्तवादिनः, सा सञ्जायत इति ॥ १ ॥ परतत्त्वस्यैव शब्दान्तराभिधेयतामाह—सैषाऽविद्यारहिताऽवस्था–अविद्यया परतन्त्रप्रसिद्धया रहिता–विकलाऽवस्था अवस्थितिर्वस्तुमती या, सा एषा परतत्त्वरूपा परमात्मशब्देन वाच्या–अभिधेया, इतिशब्दः स्वरूपं दर्शयति, एषैव चावस्था विज्ञेया—विज्ञातव्या रागादिविवर्जिता–रागादिरहिता, तथ्यं–सत्यं रूपमात्मनस्तद्भावस्तत्ता ॥ २ ॥ अस्यामेवावस्थायामन्यदपि तन्त्रान्तरोक्तं संवादयन्नाह—

वैशेषिकगुणरहितः पुरुषोऽस्यामेव भवति तत्त्वेन । विध्यातदीपकल्पस्य हन्त जात्यन्तराप्राप्तेः ॥ ३ ॥

एवं पशुत्वविगमो दुःखान्तो भूतविगम इत्यादि । अन्यदपि तन्त्रसिद्धं सर्वमवस्थान्तरेऽत्रैव ॥ ४ ॥

विशेषे भवा वैशेषिकास्ते च ते गुणाश्च–बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः वैशेषिकगुणास्तै रहितो–विप्रयुक्तः पुरुषोऽस्यामेव–अवस्थायां भवति जायते तत्त्वेन–परमार्थेन । अस्यामेवेत्यवधारणफलमाह–विध्यातदीपेन कल्पस्तुच्छरूपस्तन्त्रान्तरप्रसिद्ध्या तस्य हन्त इत्यवधारणे जात्यन्तरस्य–दोषवतः सतोऽदोषवत्त्वस्याप्राप्तेः–अलाभात्, नहि तुच्छरूपतामापन्नोऽविद्यारहितावस्थां वस्तुसतीं भजत इति जात्यन्तराप्राप्तिः ॥३॥ एवं बौद्धमतनिरासं प्रतिपाद्य वस्तुसत्यामवस्थायां तन्त्रान्तरोक्तं संभवित्वेन निदर्शयन्नाह–एवम्–उक्त-

1 तेनानन्तशुद्धज्ञानगुणान्वय्यात्मद्रव्यरूपाप्यशुद्धज्ञानाद्यभावरूपा मुक्तिः सिद्धा, न तु सर्वथाऽभावरूपा बौद्धाभिमता 2 नच स्वाभावार्थं कश्चित्प्रवृत्तिः सम्भवतीति पुरुषार्थत्वादन्वय्यात्मद्रव्यस्योक्तावस्थैव मुक्तिर्घटते । एतेन सर्वथा सन्तानोच्छेद इत्येकेषां बौद्धानां शुद्धक्षणोत्पाद इत्यन्येषां च मत निरस्तं भवति । अनन्वितशुद्धक्षणानां मुक्तिस्वेऽन्यान्यमुक्तिसाङ्कर्यप्रसङ्गात् । वैशेषिकगुणरहित इति वाग्भङ्ग्या कथचिन्निर्गुणमुक्तिपक्ष आहतः, सर्वथा निर्गुणमुक्तिपक्षस्तु वेदान्त्यादीनामपास्तः

लघुपरिणामोपेतं, अमूर्त्तद्रव्यत्वादगुरुलघु परं तत्त्वम् ॥१५॥ सर्वाबाधारहितं—शारीरमानसाबाधाविमुक्तम्, परम आनन्दो यस्मिन् सुखे तेन सङ्गतं-युक्तं, अनेन परपरिकल्पितनिःसुखदुःखमोक्षव्यवच्छेदमाह, न विद्यते सङ्गो यस्मिन्नित्यसङ्गं—असङ्गतायुक्तं, तल्लक्षणं चेदम्—"भये च हर्षे च मतेरविक्रिया, सुखेऽपि दुःखेऽपि च निर्विकारता । स्तुतौ च निन्दासु च तुल्यशीलता, वदन्ति तां तत्त्वविदो ह्यसङ्गताम् ॥१॥" निःशेषा याः कलास्ताभ्योऽतीतं तथाभव्यत्वाद्यात्मस्वभावभूतांशातिक्रान्तं भव्यत्वासिद्धत्वयोगसहवर्तिक्षायिकचारित्राद्यभावात्, सदा शिवमस्येति सदाशिवं, न हि परतत्त्वमशिवं कदाचिद्भवति, आदौ भवमाद्यं—प्रधानं सत्तया अनादि-

...भावेनावस्थितं वा, आदिशब्दान्निरञ्जनादिग्रहः, सदाशिवाद्यादिभिः पदैर्वाच्यं—अभिधेयं परं तत्त्वं सर्वत्राभिस-

...पञ्चदशं षोडशकम् ॥

रूपं मुक्तावस्थायां निवर्तते योग्यताशब्देनोच्यते, तस्यां तथ्योगयोग्यतायां सत्यां चित्रायां चैव-नानाप्रकारायां चैव, सकलजीवापेक्षया कालादिभेदेनात्मनां बीजसिद्धिभावात्, नान्यथा, एकस्वभावायां योग्यतायां फलभेदासिद्धेः, दृश्यते च द्रव्यक्षेत्रकालभावप्रक्रमेण तीर्थकरातीर्थकरप्रत्येकबुद्धस्वयंबुद्धादिरूपः फलभेदः, तस्माच्चित्ररूपायामेव योग्यतायां स युज्यते, नियमात्-नियमेन, परिभावनीयं-सर्वप्रकारैश्चिन्तनीयं एतत्रयं-जीवकर्म[तथा]भव्यत्वरूपं विद्वद्भिः-सूरिभिः तत्त्वदृष्टया-परमार्थविषयया बुद्ध्याऽऽगमापनीतविपर्ययमलया प्रज्ञयोच्चैः-अत्यर्थम् ॥ ६ ॥ एतत्रयानाश्रयणे संसारमोक्षयोरनुपचरितरूपयोरभावप्रदर्शनायाह—

पुरुषाद्वैतं तु यदा भवति विशिष्टमथ च बोधमात्रं वा। भवभवविगमविभेदस्तदा कथं युज्यते मुख्यः? ॥ ७ ॥

द्वयोर्भावो द्विता तस्यां भवं सैव वा द्वैतं न द्वैतमद्वैतं पुरुषस्याद्वैतं—एकत्वं तु यदा भवत्यङ्गीकरणेन वादिनो विशिष्टं-केवलं रागादिवासनारहितमवबोधमात्रं वा-बोधस्वलक्षणं वा, वेदान्तवादिनः पुरुषाद्वैतं मन्यंते, यथाहुरेके-"पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यं, उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नैजति यद् दूरे यदु अन्तिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यतः" तथा "विद्याविनयसम्पन्ने, ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च, पण्डिताः समदर्शिन ॥ १ ॥" इति श्रुतिस्मृतिप्रसिद्धेः,

---

१ ननु तीर्थकरसिद्धत्वादिकं नीलघटत्वादिवद्धर्मसमाजसिद्धमिति तत्प्रयोजकतया योग्यताभेदो न सिध्येदिति चेन्न, कार्यं तावद्धर्मकत्वस्य योग्यताविशेषप्रयोज्यत्वात्, तत्र तथाविधसामग्रीसमाजस्य प्रयोजकत्वे तत्रापि तथाविधप्रयोजकान्तराश्रयणेऽनवस्थानात्, यदि चेयमनवस्था प्रामाणिकानां न दोषाय तदायं नियतधर्मककार्यनियामकस्तथाविधसामग्रीभाज एव कथंचिदेकत्वेन भासमानः परिणामिभव्यत्वस्वरूपः स्वीक्रियतां, इत्थमपि स्याद्वादप्रक्रियया दोषाभावादित्यधिकमस्मत्कृतस्याद्वादकल्पलतायाम्

नीत्या पशुत्वं-अज्ञत्वं तस्य विगमः-अपगमः सर्वथा निवृत्तिः दुःखानामन्तो दुःखान्तो भूतानां-पृथिव्यादीनां विगम-आत्यन्तिको वियोग इत्यादि-एवं प्रभृति अन्यदपि तन्त्रसिद्धं-पूर्वोक्तं सर्वं-निरवशेषमवस्थान्तरेऽविद्यारहितावस्थाविशेषेऽस्यैव परतन्त्ररूपं युज्यते, नान्यत्रेति ॥४॥ एतच्च सर्वमपि तन्त्रान्तरसिद्धं यथाविधे वस्तुत्वे सति युज्यते तथाविधमुपदर्शयितुमाह

**परिणामिन्यात्मनि सति तत्तद्ध्वनिवाच्यमेतदखिलं स्यात् । अर्थान्तरे च तत्त्वेऽविद्यादौ वस्तुसत्येव ॥५॥**
**तद्योगयोग्यतायां चित्रायां चैव नान्यथा नियमात् । परिभावनीयमेतद्विद्वद्भिस्तत्त्वदृष्ट्योच्चैः ॥ ६ ॥**

अन्यथा चान्यथा च भवतोऽप्यन्वयित्वं परिणामः स विद्यते यस्य स परिणामी तस्मिन् परिणामिनि आत्मनि-जीवे सति-विद्यमाने, मुक्तियादिनामात्मसत्तायां न विप्रतिपत्तिरस्ति, चैतन्यस्वरूपस्य परलोकान्वयिनः पुरुषस्य सर्वैरप्यभिमतत्वात्, नित्यत्वक्षणिकत्वादिविपर्यये विप्रतिपत्तिरिति तन्निरासद्वारेण परिणामिनीत्युक्तं, तैस्तैर्ध्वनिभिः-शब्दैः पूर्वोक्तैर्वाच्यम्-अभिधेयं एतत्-प्रागुक्तमविद्यारहितावस्थाविशेषिकगुणरहितपुरुषपशुत्वविगमादि, सर्ववा ध्वनिभिर्यद्वाच्यं सम्यग्दर्शनज्ञानसदनुष्ठानादिप्रकरणोक्तं अखिलं स्यात्-भवेत्सम्भवेत् अर्थान्तरे च-वस्त्वन्तरे च भिन्ने तत्त्वे पदार्थे अविद्यादौ-अविद्याऽदृष्टसंस्कारादौ वस्तुसत्येव-परमार्थसत्येव, न संवृतिसति, तस्य परमार्थतः कल्पितरूपत्वेनासत्त्वात् ॥ ५ ॥ किमात्मनि परिणामिन्यविद्यादौ च वस्तुसति सर्वमिदं स्याद् आहोस्विदन्यदपि हेत्वन्तरं मुक्तामुक्तात्मनोर्भेदकं कारणभूतमस्तीत्याशङ्कायामिदमाह-तेनार्थान्तरभूतेन तत्त्वेनाविद्यादिना योगः-सम्बन्धः, आत्मनः, कर्मबन्ध इत्यर्थः, तस्मिन् योग्यता-जीवस्य कर्मपुद्गलग्राहकस्वभावत्वं अनादिपारिणामिकभव्यभावलक्षणं सहजमल-

रूपं मुक्तावस्थायां निवर्तते योग्यताशब्देनोच्यते, तस्यां तद्योगयोग्यतायां सत्यां चित्रायां चैव-नानाप्रकारायां चैव, सकलजीवापेक्षया कालादिभेदेनात्मनां बीजसिद्धिभावात्, नान्यथा, एकस्वभावायां योग्यतायां फलभेदासिद्धेः, दृश्यते च द्रव्यक्षेत्रकालभावप्रक्रमेण तीर्थकरातीर्थकरप्रत्येकबुद्धस्वयंबुद्धादिरूपः फलभेदः, तस्माच्चित्ररूपायामेव योग्यतायां स युज्यते, नियमात्-नियमेन, परिभावनीयं-सर्वप्रकारैश्चिन्तनीयं एतत्त्रयं-जीवकर्म[तथा]भव्यत्वरूपं विद्वद्भिः-सूरिभिः तत्त्वदृष्ट्या-परमार्थविषयया बुद्ध्याऽऽगमापनीतविपर्ययमलया प्रज्ञयोवैः-अत्यर्थम्[1] ॥ ६ ॥ एतन्न्यायानाश्रयणे संसारमोक्षयोरनुपचरितरूपयोरभावप्रदर्शनायाह—

## पुरुषाद्वैतं तु यदा भवति विशिष्टमथ च बोधमात्रं वा। भवभवविगमाविभेदस्तदा कथं युज्यते मुख्यः? ॥ ७ ॥

द्वयोर्भावो द्विता तस्यां भवं सैव वा द्वैतं न द्वैतमद्वैतं पुरुषस्याद्वैतं—एकत्वं तु यदा भवत्यङ्गीकरणेन वादिनो विशिष्टं-केवलं रागादिवासनारहितमथबोधमात्रं वा-बोधस्वलक्षणं वा, वेदान्तवादिनः पुरुषाद्वैतं मन्यंते, यथाहुरेके-"पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यं, उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नैजति यद् दूरे यदु अन्तिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यतः" तथा "विद्याविनयसम्पन्ने, ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च, पण्डिताः समदर्शिन ॥ १ ॥" इति श्रुतिस्मृतिप्रसिद्धेः,

---

1 ननु तीर्थंकरसिद्धाद्यादिकं नीलघटवादिवद्ध्वंसमात्रसिद्धमिति तत्प्रयोजकतया योग्यताभेदो न सिध्येदिति चेन्न, कार्ये तावद्धर्मकत्वस्य योग्यताविशेषप्रयोज्यत्वात्, तत्र तथाविधसामग्रीसमाजस्य प्रयोजकत्वे तत्रापि तथाविधप्रयोजकान्तराश्रयणेऽनवस्थानात्, यदि चेयमनवस्था प्रामाणिकानां न दोषाय तदापि नियतधर्मकार्यनियामकतथाविधसामग्रीसमाज एव कथंचिदेकत्वेन भासमानः परिणामिभव्यत्वस्वरूपः स्वीक्रियतां, इत्थमपि स्याद्वादप्रक्रियया योगाभाव्यादिविकमामत्(?) स्याद्वादकल्पलतायाम्

विज्ञानवादिनस्तु शेषनीलादिविकल्पशून्यं पारमार्थिकरागादिवासनादिविशेषरहितं च बोधस्वलक्षणमात्रमेव प्रतिजानते, यथोक्तं–"चित्तमेव हि संसारो, रागादिक्लेशवासितम्। तदेव तैर्विनिर्मुक्तं, भवांत इति कथ्यते॥ १ ॥" भवश्च भवविगमश्च–तौ संसारमोक्षौ तयोर्निर्भेदो भवभवविगमविभेदस्तदा कथं युज्यते मुख्यः?, संसारमोक्षयोर्मुख्यो भेदो न युज्यते, अर्थान्तरे ह्यविद्यादौ तत्त्वे भेदके सति तयोर्विशेषो युज्यत इतिभावः ॥ ७ ॥ कस्मात्पुनः पुरुषाद्वैतं बोधमात्रं वा विशिष्टं न भवतीत्याह—

अग्निजलभूमयो यत्परितापकरा भवेऽनुभवसिद्धाः। रागादयश्च रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥ ८ ॥
परिकल्पिता यदि ततो न सन्ति तत्त्वेन कथममी स्युरिति?। तन्मात्र एव तत्त्वे भवभवविगमौ कथं युक्तौ? ९
परकल्पनापि चैषा हन्त विकल्पात्मिका न सम्भवति। तन्मात्र एव तत्त्वे यदिवाऽभावो न जात्वस्याः ॥१०॥
तस्माद्यथोक्तमेतत् त्रितयं नियमेन धीधनैः पुम्भिः। भवभवविगमनिबन्धनमालोच्यं शान्तचेतोभिः॥११॥

अग्निश्च जलं च भूमिश्चाग्निजलभूमयो यद्–यस्मात् परितापकराः—परमार्थतो दुःखानुभवकराः, वैषयिकसुखस्य भावतो दुःखरूपत्वात्, भवे–संसारे अनुभवसिद्धाः–प्रत्यक्षसिद्धाः, किं पुनर्बहिस्त्रयाणामर्थानामुपादानं, वायोरपि पठितत्त्वाल्लोकसिद्धत्वाच्च, उच्यते, वायुपदार्थे द्रव्यगुणरूपतायां विप्रतिपद्यन्ते वादिनो, नाग्निजलभूमिषु, तेषां द्रव्यरूपेण प्रतीतेः, अतो न वायुग्रहणं, सर्व्वेन्द्रियानुपलम्भाद्वा, यद्वा अग्निसहचरितत्त्वेनैव वायोर्ग्रहणं, "यत्र तेजस्तत्र वायु"रिति वचनात्, रागादयश्च–रागद्वेषमोहाश्च रौद्रा–दारुणास्तीव्रसङ्क्लेशरूपेण, 'असत्प्रवृत्त्यास्पदम्' असत्प्रवृत्तीनां–असुन्दरप्रवृत्तीनामास्पदं–प्रतिष्ठा लोके–सर्व्वत्रैवानुभवसिद्धा यतो वर्त्तते,

यदि पुरुषाद्वैतमेव भवेत् प्रत्यक्षसिद्धा बाह्या ज्वलनादयः पदार्था न स्युः; तेषां चैतन्यस्वरूपपुरुषव्यतिरेकेण रूपान्तरोपलब्धेः, तेषां तु बहिर्वर्तिनां ज्वलनादीनां पुरुषत्वाङ्गीकरणे सर्व्वपदार्थानां नाममात्रमेव कृतं स्यात्पुरुष इति न तत्र विप्रतिपत्तिः। विज्ञानाद्वैतमपि यदि भवेन्न रागादयोऽनुभवसिद्धाः प्रति प्राणिनो भवेयुः, तथा च सकललोकपरीक्षकविरोधस्तेषां सर्वैरभ्युपगमादनुभवस्य चान्यथा कर्तुमशक्यत्वादिति ॥ ८ ॥ अथ सर्व्वेऽप्येते बाह्या आन्तराश्च परिकल्पितरूपा एवेत्याशङ्कायामिदमाह–परिकल्पिता–अवस्तुसन्तः कल्पनामात्रनिर्म्मितशरीरा बाह्या आन्तराश्च यदि भवताऽभ्युपगम्यन्ते ततः–परिकल्पितत्वादेव न सन्ति–न विद्यन्ते तत्त्वेन–परमार्थेन रूपममी पदार्थाः स्युः–भवेयुः, न कथंचिद्भवेयुः!, भवताप्यनभ्युपगमात्, इत्येवं तन्मात्र एव–पुरुषमात्र एव बोधमात्र एव च तत्त्वे–परमार्थे भवभवविगमौ–संसारमोक्षौ कथं–केन प्रकारेण युक्तौ–सङ्गतौ?, न कथञ्चिदित्यर्थः ॥९॥ कस्मात्पुनः परिकल्पिता एते न सन्तीति, उच्यते, परिकल्पनाया एवाभावादित्याह–परिकल्पनापि च एषां—बाह्यान्तराणामर्थानां हन्त विकल्पात्मिका-वस्तुशून्यनिश्चयात्मिका न संभवति–न युज्यते निर्बीजत्वात्, युक्तिमाह—तन्मात्र एव–पुरुषमात्र एव ज्ञानमात्र एव च तत्त्वे तदतिरेकेणेतरपदार्थाभावात्, अभ्युपगम्य परिकल्पनां दूषणान्तरमाह–यदिवा अभावः–असम्भवो न–नैव जातु–कदाचिदप्यस्याः–परिकल्पनायाः, यदि निर्बीजाऽपीयं बाह्यान्तरपदार्थपरिकल्पनेष्यते ततः संसारवन्मुक्तावपि भवेदियमितिभावः, ततश्च संसारमोक्षभेदानुपपत्तिः, परिकल्पनाबीजसद्भावाभ्युपगमे तु पुरुषबोधस्वलक्षणव्यतिरिक्तवस्त्वन्तरापत्त्या प्रस्तुताद्वैतपक्षद्वयहानिः ॥ १० ॥ एवं परपक्षं निरस्य स्वपक्षसमर्थनायाह–तस्माद्यथोक्तमेतत् त्रितयं–जीवकर्म्मतथाभव्यत्वरूपं नियमेन–नियोगेन धीधनैः बुद्धिधनैः पुम्भिः पुम्भिर्भवभवविगमनिबन्धनं–संसारमोक्षकारणं आलोच्यं—आलोचनीयं शान्तचेतोभिः शान्तचित्तैः ॥ ११ ॥

नतु चागमप्रमाण्यमवलम्बमानैः पुरुषाद्वैतं ज्ञानाद्वैतं च यदेष्यते तदाह को दोष इत्याह—

ऐदम्पर्यं शुद्ध्यति यत्रासावागमः सुपरिशुद्धः । तदभावे तद्देशः कश्चित्स्यादन्यथाग्रहणात् ॥ १२ ।
तत्रापि च न द्वेषः कार्यो विषयस्तु यत्नतो मृग्यः । तस्यापि न सद्वचनं सर्वं यत्प्रवचनादन्यत् ॥१३॥
अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः । परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टाङ्गिकी तत्त्वे ॥ १४ ॥
...शानां यत्नतः समालोच्य । पुंसा प्रवर्त्तितव्यं कुशले न्यायः सतामेषः ॥ १५ ॥
... समुद्धृता मन्दमतिहितार्थं तु । आत्मानुस्मरणाय च भावा भगवद्धरि-
॥ १६ ॥ इति षोडशं षोडशकं संपूर्णं ॥

न्यथाप्रतिपत्तेर्यतः समतामवलम्बमानास्तेऽपि तथेच्छन्ति[1] ॥ १२ ॥ मूलागमव्यतिरिक्ते तदेकदेशभूत आगमेऽन्यथा परिगृहीते ...॥ विधेयो नवेति तदभावप्रतिपादनायाह—तत्रापि च—तदेकदेशभूत आगमान्तरे न द्वेषः कार्यो—न द्वेषो विधेयो, विषयस्तु-अभिधेयज्ञेयरूपो यत्नतो—यत्नेन मृग्यः-अन्वेषणीयो, यद्येवं सर्व्वमेव तद्वचनं किं न प्रमाणीक्रियत इत्याह—तस्याप्यागमान्तरस्य न सत्—शोभनं वचनं सर्व्वम्—अखिलं यत्प्रवचनात्—मूलागमादन्यत्, यत्तु तदनुपाति तत्सदेवेति[2] ॥ १३ ॥ कस्मात्पुनस्तत्राद्वेषः क्रियत इत्याह—अद्वेषः-अप्रीतिपरिहारस्तत्त्वविषयस्तत्पूर्विका ज्ञातुमिच्छा जिज्ञासा—तत्त्वविषया ज्ञानेच्छा तत्त्वजिज्ञासा, सा पूर्व्विका यो धाम्नः श्रोतुमः गिराक्लपा, श्रोतुमिच्छा शुश्रूषा-तत्त्वविषयैव तत्त्वशुश्रूषानिबन्धनं श्रवणम्-आकर्णनं तत्त्वविषयमेव बोधः-अवगमः परिच्छेदो विवक्षितार्थस्य श्रवणनिबन्धनस्तत्त्वविषय एव मीमांसा—सद्विचाररूपा बोधानन्तरभाविनी तत्त्वविषयैव. श्रवणं च बोधश्च मीमांसा च श्रवणबोधमीमांसाः परिशुद्धा-सर्वतो भावविशुद्धा प्रतिपत्तिः-मीमांसोत्तरकालभाविनी निश्चयाकारा परिच्छित्तिरिदमित्थमेवेति तत्त्वविषयैव, प्रवर्तनं प्रवृत्तिः-अनुष्ठानरूपा परिशुद्धप्रतिपत्त्यनन्तरभाविनी तत्त्वविषयैव, प्रवृत्तिशब्दो द्विरावर्त्यते, तेनायमर्थो भवति, तत्त्वे प्रवृत्तिरष्टभिरङ्गैर्निर्वृत्ता अष्टाङ्गिकी, एभिरद्वेषादिभिरष्टभिरङ्गैस्तत्त्वप्रवृत्तिः संपद्यते, तेनागमान्तरे मूलागमैकदेशभूते न द्वेषः कार्य इति ॥१४॥ एवं सद्धर्म्मपरीक्षकादीन् भावान् प्रतिपाद्य समस्तप्रकरणार्थोपसंहारद्वारेण सदुपदेशदानायाह—

1 गुण्यलवर्थानुपपत्तिपरिहारो यत्नतः कर्त्तव्यः, गुणग्रहरसिकानां परवचनानुपपत्तिपरिहारप्रवणस्वभावत्वात्, ननु वस्तुत उपपन्नार्थवचनस्यानुपपत्तिशङ्का परिहार्या, ननु सर्वथानुपपन्नस्येति निर्विषयोऽयमुपदेशः २ तथा च तस्य मूलागमेनैकवाक्यतामापाद्योपपत्तिरेव कर्त्तव्या, इत्थमेव सम्यग्दृष्टिपरिगृहीतस्य मिथ्याश्रुतस्यापि सम्यक्श्रुतत्वसिद्धेः, सदरचिस्तु तस्यतो दृष्टिवादादरचिपर्यवसायिनीति सुप्रसिद्धमुपदेशपदादौ

ननु चागमप्रामाण्यमवलम्बमानैः पुरुषाद्वैतं ज्ञानाद्वैतं च यदेष्यते तदाह को दोष इत्याह—

ऐदम्पर्यं शुद्ध्यति यत्रासावागमः सुपरिशुद्धः । तदभावे तद्देशः कश्चित्स्यादन्यथाग्रहणात् ॥ १२ ॥
तत्रापि च न द्वेषः कार्यो विषयस्तु यत्नतो मृग्यः । तस्यापि न सद्वचनं सर्वं यत्प्रवचनादन्यत् ॥१३॥
अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः । परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टाङ्गिकी तत्त्वे ॥ १४ ॥
गर्भार्थं स्वल्वेषां भावानां यत्नतः समालोच्य । पुंसा प्रवर्त्तितव्यं कुशले न्यायः सतामेषः ॥ १५ ॥
एते प्रवचनतः खलु समुद्धृता मन्दमतिहितार्थं तु । आत्मानुस्मरणाय च भावा भवविरहसि-
द्धिफलाः ॥ १६ ॥ १६ ॥ इति षोडशं षोडशकं संपूर्णं ॥

॥ इति षोडशकं प्रकरणं संपूर्णम् ॥

ऐदम्पर्यं–तात्पर्यं पूर्वोक्तं शुद्ध्यति–स्फुटीभवति यत्रागमे असावागमः सुपरिशुद्धः–प्रमाणभूतः, तदभावे–ऐदम्पर्य-शुद्ध्यभावे तद्देशः-परिशुद्धागमैकदेशः कश्चिदन्य आगमः स्यात्, ननु मूलागम एव, अन्यथाग्रहणात्, मूलागमैकदेशस्य सतो विषय-

स्यान्यथाप्रतिपत्तेर्यतः समतामवलम्बमानास्तेऽपि तथेच्छन्ति[1] ॥ १२ ॥ मूलागमव्यतिरिक्ते तदेकदेशभूत आगमेऽन्यथा परिगृहीते द्वेषो विधेयो नवेति तदभावप्रतिपादनायाह–तत्रापि च–तदेकदेशभूत आगमान्तरे न द्वेषः कार्यो–न द्वेषो विधेयो, विषयस्तु-अभिधेयज्ञेयरूपो यत्नतो–यत्नेन मृग्यः अन्वेषणीयो, यद्येवं सर्व्वमेव तद्वचनं किं न प्रमाणीक्रियत इत्याह–तस्याप्यागमान्तरस्य न सत्–शोभनं वचनं सर्व्वम्–अखिलं यत्प्रवचनात्–मूलागमादन्यत्, यत्तु तदनुपाति तत्सदेवेति[2] ॥ १३ ॥ कस्मात्पुनस्तत्राद्वेषः क्रियत इत्याह—अद्वेषः-अप्रीतिपरिहारस्तत्त्वविषयस्तत्पूर्विका ज्ञातुमिच्छा जिज्ञासा—तत्त्वविषया ज्ञानेच्छा तत्त्वजिज्ञासा, सा पूर्विका बोधाम्भःश्रोतसः सिरारूपा, श्रोतुमिच्छा शुश्रूषा-तत्त्वविषयैव तत्त्वशुश्रूषानिबन्धनं श्रवणम्-आकर्णनं तत्त्वविषयमेव बोधः-अवगमः परिच्छेदो विवक्षितार्थस्य श्रवणनिबन्धनस्तत्त्वविषय एव मीमांसा–सद्विचाररूपा बोधानन्तरभाविनी तत्त्वविषयैव. श्रवणं च बोधश्च मीमांसा च श्रवणबोधमीमांसाः परिशुद्धा-सर्वतो भावविशुद्धा प्रतिपत्तिः-मीमांसोत्तरकालभाविनी निश्चयाकारा परिच्छित्तिरिदमित्थमेवेति तत्त्वविषयैव, प्रवर्त्तनं प्रवृत्तिः-अनुष्ठानरूपा परिशुद्धप्रतिपत्त्यनन्तरभाविनी तत्त्वविषयैव, प्रवृत्तिशब्दो द्विरावर्त्यते, तेनायमर्थो भवति, तत्त्वे प्रवृत्तिरष्टभिरङ्गैर्निर्वृत्ता अष्टाङ्गिकी, एभिरद्वेषादिभिरष्टभिरङ्गैस्तत्त्वप्रवृत्तिः संपद्यते, तेनागमान्तरे मूलागमैकदेशभूते न द्वेषः कार्य इति ॥१४॥ एवं सद्धर्म्मपरीक्षकादीन् भावान् प्रतिपाद्य समस्तप्रकरणार्थोपसंपसंहारद्वारेण सदुपदेशदानायाह–

1 गृहस्थस्यार्थानुपपत्तिपरिहारो यत्नतः कर्त्तव्य, गुणग्रहरसिकानां परवचनानुपपत्तिपरिहारप्रवणस्वभावत्वात्, ननु वस्तुत उपपन्नार्थवचनस्यानुपपत्तिनश्चा परिहार्या, ननु सर्वथानुपपन्नस्येति निर्विषयोऽयमुपदेशः 2 तथा च तस्य मूलागमेनैकवाक्यतामापाद्योपपत्तिरेव कर्त्तव्या, इत्थमेव सम्यग्दृष्टिपरिगृहीतस्य मिथ्याश्रुतस्यापि सम्यक्श्रुतत्वसिद्धेः, तद्रुचिस्तु तत्त्वतो दृष्टिवादरुचिपर्य्यवसायिनीति सुप्रसिद्धमुपदेशपदादौ

गर्भार्थं-हृदयगतार्थं भावार्थमितियावत् खलुशब्दोऽवधारणे एषां-प्राक्प्रक्रान्तानां भावानां—पदार्थानां यत्नतः—प्रयत्नात् समालोच्य-सूक्ष्मया प्रज्ञया सम्यगालोच्य गर्भार्थमेवोचानभूतमर्थं पुंसा--पुरुषेण प्रवर्त्तितव्यं-प्रवृत्तिर्विधेया, कुशले-पुण्ये कुशलहेतुत्वात् सदनुष्ठाने, न्यायः-अविचलितरूपो मार्गः सतां-सत्पुरुषाणां एष वर्त्तते, नान्यः ॥ १५ ॥ कुतः पुनरेते भावा भवताऽभिहिताः ? किमर्थं वेत्याह— एते-प्रस्तुताः प्रवचनतः-प्रशस्तं प्रगतमवगाढं वा वचनं प्रवचनं प्रकृष्टं वचनं शेषागमापेक्षया प्रवचनं सूत्रतोऽर्थतश्च द्वादशाङ्गं तस्मात् खलुशब्दो वाक्यालङ्कारे समेकीभावेनाविप्रतिपत्त्या उद्धृताः-पृथग् व्यवस्थापिता मन्दमतीनां-मन्दधियां हितार्थं तु-हितप्रयोजनमेव आत्मनोऽनुस्मरणाय च-स्वयमेवानुस्मृतिनिमित्तं च भावाः-पदार्थाः, आदित आरभ्य भवविरहः-संसारविरहो मोक्षस्तस्य सिद्धिः-निष्पत्तिः सैव फलं येषां भावानां ते भवविरहसिद्धिफलाः ॥ १६ ॥ १६ ॥

दानीं ग्रन्थकारो गर्भार्थपरिज्ञानाय बहुश्रुतभक्तिमुपदर्शन् स्ववचनप्रार्थनामाह—

धर्म्मश्रवणे यत्नः सततं कार्यो बहुश्रुतसमीपे । हितकाङ्क्षिभिर्नृसिंहैर्वचनं ननु हारिभद्रमिदम् ॥ १७ ॥

दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः—श्रुतचारित्ररूपस्तस्य श्रवणं-आकर्णनमर्थतस्तस्मिन् धर्म्मश्रवणे यत्नः-प्रयत्नः आदरः सततम्-अनवरतं कार्यः-कर्त्तव्यो बहुश्रुतसमीपे-बहुश्रुतसन्निधाने हितकाङ्क्षिभिः-हिताभिलाषिभिर्नृसिंहैः-पुरुषसिंहैः पुरुषोत्तमैरितियावत् वचनं—प्रार्थनारूपं नन्विति वितर्के, एवं वितर्कयत यूयं, हरिभद्रस्येदं हारिभद्रमिदमेवंविधं यदुत-बहुश्रुतसमीपे

धर्मश्रवणे यत्नो विधेयः, अथवा वचनमागमरूपं ननु-निश्चितं हारि-मनोहारि भद्रमिदं यतो वर्त्तते अतो वचनगतधर्म्मश्रवणे बहुश्रुतसमीपे एव यत्न श्रेयान्, अबहुश्रुतेभ्यो धर्मश्रवणेऽपि विपरीतार्थोपपत्तेः प्रत्यवायसंभवाद्, अथवा हरिभद्रसूरेः स्तुतिं कुर्वाणोऽपर एव कश्चिदिदमाह-वचनं ननु हारिभद्रमिदम् हरिभद्रसूरेरिदं धर्म्मगतं वचनं-प्रकरणाख्यं, तस्माद्धर्म्मश्रवणे बहुश्रुतसमीपे एव यत्नो विधेयः, अबहुश्रुतेभ्यो हरिभद्राचार्यवचनानुपलम्भाद्, एवं वचनमाहात्म्यद्वारेण संस्तौति ॥ १७ ॥ कृत्वा विवरणमेतत्पुण्यं यदवापि तेन भव्यजनः । अध्यास्तां षोडशकलाशशिमण्डलभास्वरं स्थानम् ॥ १ ॥ इति यशोभद्राचार्यविरचितवृत्तियुतं षोडशकप्रकरणं समाप्तं ॥

समाप्ता श्रीषोडशकप्रकरणवृत्तिः

